श्रेष्ठि देवचन्द्र लालभाइ जैनपुस्तकोद्धारे ग्रन्थाङ्कः ९२

परमार्हतकुमारपालभूपालप्रतिबोधक–कलिकाल–
सर्वज्ञश्रीमद्हेमचन्द्राचार्यविरचितः–

# श्रीअभिधानचिन्तामणिकोशः ।

तैरेव विरचितैः, (१) लिङ्गानुशासन, (२) शेषनाममाला,
(३) निघण्टुशेषैः सुधाकुशलविरचितया एकाक्षर-
नाममालया, जिनदेवसूरिसदृब्धेन नाममाला-
शिलोञ्छेन च सनाथः ।

अभिधानचिन्तामणिगतशब्दानामकाराद्यनुक्रमेण
शब्दानुक्रमणिकया चालङ्कृतः ।

प्रकाशकौ—

हीराचन्द कस्तुरचन्द जवेरी
मोतीचंद मगनभाई चोकसी
श्रेष्ठि देवचन्द्र लालभाइ जैनपुस्तकोद्धारसंस्थायाः
कार्यवाहकौ [illegible]

वि० स० २००२ वीराब्द [illegible] १९४६

प्रथमसंस्करणम् ] मूल्यम् [illegible] [प्रतयः १२५०

# प्राक्कथन

श्रीमद् हेमचन्द्राचार्यनी कीर्तिगाथानु वर्णन करवु एटले सर्वमान्य सोनापर ढोळ चढाववा बराबर छे तेमनु व्यक्तित्व, प्रतिभा, विद्वत्ता तथा सर्वतोमुखी शक्ति एटली जगजाहेर छे के जैनज नहि पण अजैनोमा ये भाग्येज कोई हिंदी सस्कृतिनो विद्वान हशे जे श्री हेमचन्द्राचार्यनी यश गाथाथी अजाण हशे "गुजरातना ज्योतिर्धर" थी मांडी "कलिकालसर्वज्ञ" तरीकेनी एमनी कीर्ति ए वस्तुनी शाख पूरे छे

तेओश्री एक महान जैनाचार्य होवा छवा तेओनी साहित्य-विषयक प्रवृत्ति सर्व क्षेत्रोमा प्रसरेली हती काव्य, छद, व्याकरण, कोश तथा गूढ तत्त्वज्ञान वगेरे विषयो तेमने हस्तामलकवत् हता सिद्धराज जयसिंह तथा कुमारपाळ जेवा प्रतापी गूर्जर नरेशोपर तेमनो अप्रतिम प्रभाव तेमनी बुद्धि तेजस्विता तेमज प्रतिष्ठा बतावे छे एवा महापुरुषनी एक अद्वितीय कृति जनसमाज समक्ष मुकता अमने आनद थाय छे

श्रीअभिधानचिंतामणि कोशनी महत्ता तेमज उपयोगितानी रूपरेखा दोरवी ए झवेरी आगळ झवेरातनु वर्णन करवा बराबर छे विद्वद्वर्ग आ अणमोल झवेरातने सारी रीते ओळखे छे

આ સંસ્થા તરફથી આનું પ્રકટીકરણ વર્ષો પૂર્વે હાથ ધરવામાં આવ્યું હતું અને તેમનું સંશોધન કાર્ય શ્રીમત્ સાગરાનંદસૂરીશ્વરજી હસ્તક થયું છે. જે ભૂલોની પરંપરાને લીધે શુદ્ધિપત્રક મુકવું પડ્યું છે એ પ્રેસના અનભિજ્ઞ કામ કરનારાઓની સાક્ષી પૂરે છે. આ કૃતિનો અમુક મોટો ભાગ મુંબઈ બહારના પ્રેસમાં છપાયો છે અને તેની બેકાળજી તથા પ્રિન્ટિંગ તરત જણાઈ જાય એવાં છે. અસ્તુ. સંસ્થા આટલા સમય બાદ પણ આ પુસ્તકને પ્રગટ કરવા ભાગ્યશાળી થાય છે તે ઓછો આનંદનો વિષય નથી.

આ પુસ્તકના પ્રકટીકરણમાં સહાય કરનારા સર્વેનો સંસ્થા તરફથી અમે આભાર માનીએ છીએ.

લી૦ સેવકો

મુંબઈ, તા૦ ૧૫-૧૨-૪૫    હીરાચંદ કસ્તુરચંદ ઝવેરી.
સં. ૨૦૦૨, મૌન એકાદશી.    મોતીચંદ મગનભાઈ ચોકસી.
મેનેજિંગ ટ્રસ્ટીઓ.

# अभिधानचिन्तामणे विषयक्रमः।




| नाम | श्लोका पत्राणि |
|---|---|
| १ लिङ्गानुशासनम् | १–२० |
| २ एकाक्षरकोष | १–१६ |
| ३ अभिधानचिन्तामणि | १–२०४ |
| १ देवाधिदेवकाण्ड | १–१३ |
| २ देवकाण्ड | १४–४७ |
| ३ मर्त्यकाण्ड | ४८–१२७ |
| ४ तिर्यक्काण्ड | १२७–१८२ |
| ५ नरककाण्ड | १८२–१८३ |
| ६ सामान्यकाण्ड | १८३–२०४ |
| ४ शेषनाममाला | २०५–२२८ |
| ५ नाममालाशिलोञ्छ | २२९–२४६ |
| ६ निघण्टुशेष | २४७–२८६ |
| ७ अभिधानचिन्तामणिकोशस्य अकारादिवर्णानुक्रमेण शब्दानुक्रमणिका | १–४४० |




## श्रेष्ठी देवचन्द लालभाई जव्हेरी.



| | |
|---|---|
| जन्म १९०९ वैक्रमाब्दे | निर्याणम् १९६२ वैक्रमाब्दे |
| कार्तिकशुक्लैकादश्याम् | पौषकृष्णतृतीयायाम् |
| (देवदीपावली–सोमवासरे) | (मकरसङ्क्रान्तिमन्दवासरे) |
| सूर्यपूरे | मुम्बय्याम् |

श्रीसर्वज्ञाय नमः ।

# अभिधानचिन्तामणौ



## देवाधिदेवकाण्डः प्रथमः ।

प्रणिपत्यार्हत सिद्धसाङ्गशब्दानुशासन ।
रूढयौगिकमिश्राणा, नाम्ना माला तनोम्यहम् ॥१॥
व्युत्पत्तिरहिता शब्दा, रूढा आखण्डलादय ।
योगोऽन्वय स तु गुणक्रियासम्बन्धसम्भव ॥२॥
गुणतो नीलकण्ठाद्या, क्रियात स्रष्टृसन्निभा ।
स्वस्वामित्वादिसम्बन्धस्तत्राहुर्नाम तद्वताम् ॥३॥
स्वात् पाल-धन-भुग्-नेतृ-पति-मत्वर्थकादय ।
भूपालो भधनो भूभुग्, भूनेता भूपतिस्तथा ॥४॥
भूमांश्चेति कविरूढ्या, ज्ञेयोदाहरणावली ।
जन्यात्कृत्-कर्त्तृ-सृट्-स्रष्टृ-विधातृ-कर-सू-समा ॥५॥

---

१ जन्यात्-कार्यात् यथा विश्वकृत् विश्वकर्ता विश्वसृट् विश्वस्रष्टा

[२]जनकाद् योनि-ज-रुह-जन्म-भू-सूत्यणादयः ।
[३]धार्य्यात् ध्वजा-ऽस्त्र-पाण्यऽङ्क-मौलि-भूषण-भृन्निभाः ॥६॥
शालि-शेखर-मत्वर्थ-मालि-भर्त्तृ-धरा अपि ।
भोज्याद्[४] भुग-ऽन्धो-व्रत-लिट्-पायि-पा-ऽशा-ऽशनाऽऽदयः ।७।
पत्युः कान्ता-प्रियतमा-वधू-प्रणयिनी-निभाः ।
कलत्राद् वर-रमण-प्रणयीश-प्रियादयः ॥८॥
सख्युः[५] सखिसमा वाह्याद्[६], गामि-याना-ऽऽसनादयः ।
ज्ञातेः[७] स्वस्ट-दुहित्रा-ऽऽत्मजा-ऽग्रजा-ऽवरजाऽऽदयः ॥९॥
आश्रयात्[८]सद्मपर्य्याय-शय-वास्ति-सदाऽऽदयः ।
वध्याद्[९] भिद्-द्वेषि-जिद्-घाति-ध्रुग-ऽरि-ध्वंसि-शासनाः॥१०॥
अप्य-ऽन्तकारि-दमन-दर्पच्छिन्-मथनाऽऽदयः ।
विवक्षितो हि सम्बन्ध, एकतोऽपि पदात्ततः ॥११॥

---

विश्वविधाता विश्वकरः विश्वसृः ब्रह्मा, अत्र समशब्द आद्यर्थः, तेन विश्वकारकः विश्वजनक इत्याद्यपि कविरूढ्यैव । २ यथा आत्म-योनिः आत्मज इत्यादि । ३ यथा वृषभध्वजः शूलास्त्र इत्यादि । ४. यथा मधुभुक् मध्वंध इत्यादि । ५ यथा नीलकण्ठसखः इत्यादि । ६ यथा वृषगामी वृषयानः इत्यादि । ७ यथा यमस्वसा इत्यादि । ८ यथा द्युसद्मा द्युशयः इत्यादि । ९ यथा पुरभिद् पुरद्वेषी इत्यादि ।

प्राक्प्रदर्शितसम्बन्धिशब्दा योज्या यथोचितम् ।
दृश्यते खलु वाह्यत्वे, वृषस्य वृषवाहन ॥१२॥

स्वत्वे पुनर्वृषपतिर्धार्य्यत्वे वृषलाछन ।
अशोर्धार्यत्वेऽशुमाली स्वत्वेऽशुपतिरशुमान् ॥१३॥

वध्यत्वेऽहेरहिरिपुर्भोज्यत्वे चाहिभुक् शिखी ।
चिहैर्व्यक्तैर्भवेद्व्यक्तेर्ज्जातिशब्दोऽपि वाचक ॥१४॥

तथा ह्यगस्तिपूता दिग् , दक्षिणाशा निगद्यते ।
अयुग्-विषमशब्दौ त्रि-पञ्च-सप्तादिवाचकौ ॥१५॥

त्रिनेत्रपञ्चेषुसप्तपलाशादिषु योजयेत् ।
गुणशब्दो विरोध्यर्थ, नञादिरितरोत्तर ॥१६॥

अभिवत्ते यथा कृष्ण , स्यादसित सितेतर ।
वाद्ध्यादिषु पदे पूर्वे, वाडवाग्न्यादिपूत्तरे ॥१७॥

द्वयेऽपि भूभृदाद्येषु, पर्य्यायपरिवर्तनम् ।
एवं परावृत्तिसहा, योगात् स्युरिति यौगिका ॥१८॥
मिश्रा पुन परावृत्त्यसहा गीर्वाणसन्निभा ।
प्रवक्ष्यन्तेऽत्र लिङ्ग तु, ज्ञेय लिङ्गानुशासनात् ॥१९॥

देवाधिदेवाः प्रथमे, काण्डे देवा द्वितीयके ।
नरास्तृतीये तिर्यञ्चस्तुर्य एकेन्द्रियादयः ॥२०॥
एकेन्द्रियाः पृथिव्यम्बुतेजोवायुमहीरुहः ।
कृमिपीलकलूताद्याः, स्युर्द्वित्रिचतुरिन्द्रियाः ॥२१॥
पञ्चेन्द्रियाश्चेभकेकिमत्स्याद्याः स्थलखाम्बुगाः ।
पञ्चेन्द्रिया एव देवा, नरा नैरयिका अपि ॥२२॥
नारकाः पञ्चमे साङ्गाः, षष्ठे साधारणाः स्फुटम् ।
प्रस्तोष्यन्तेऽव्ययाश्चात्र, त्वन्ताथादी न पूर्वगौ ॥२३॥

अर्हन्[1] जिनः[2] पारगत[3]स्त्रिकालवित्[4]
क्षीणाष्टकर्मा[5] परमेष्ठ्य[6]ऽधीश्वरः[7] ।
शम्भुः[8] स्वयम्भू[9]र्भगवान्[10] जगत्प्रभु[11]-
स्तीर्थङ्कर[12]स्तीर्थकरो[13] जिनेश्वरः[14] ॥२४॥

स्याद्वाद्य[15]भयद[16]सार्वाः[17] सर्वज्ञः[18] सर्वदर्शि[19]केवलिनौ[20] ।
देवाधिदेव[21]बोधिद[22]पुरुषोत्तम[23]वीतरागा[24]प्ताः[25] ॥२५॥
एतस्यामवसर्पिण्यामृषभो[1]ऽजित[2]शम्भवौ[3] ।
अभिनन्दनः[4] सुमति[5]स्ततः पद्मप्रभाभिधः[6] ॥४६॥
सुपार्श्व[7]श्चन्द्रप्रभ[8]श्च, सुविधि[9]श्चाथ शीतलः[10] ।
श्रेयांसो[11] वासुपूज्य[12]श्च, विमलो[13]ऽनन्ततीर्थकृत्[14] ॥२७॥

[१५]धर्मः [१६]शान्तिः [१७]कुन्थुर[१८]रो, [१९]मल्लिश्च [२०]मुनिसुव्रतः ।
[२१]नमि[२२]र्नेमिः [२३]पार्श्वो [२४]वीरश्चतुर्विंशतिरर्हताम् ॥२८॥
ऋषभो [१]वृषभः [२]श्रेयान् श्रेयांसः स्यादनन्तजिदनन्तः ।
सुविधिस्तु [१]पुष्पदन्तो मुनिसुव्रतसु[२]व्रतौ तुल्यौ ॥२९॥
अरिष्टनेमिस्तु नेमिर्वीरश्चरमतीर्थकृत् ।
महावीरो वर्द्धमानो, देवार्यो ज्ञातनन्दनः ॥३०॥
गणा नवाऽस्यर्षिसङ्घा, एकादश गणाधिपाः ।
इन्द्रभूतिरग्निभूतिर्वायुभूतिश्च गौतमाः ॥३१॥
व्यक्तः सुधर्मा मण्डितमौर्यपुत्रावकम्पितः ।
अचलभ्राता मेतार्यः, प्रभासश्च पृथक्कुलाः ॥३२॥
केवली चरमो जम्बूस्वाम्यथ प्रभवः प्रभुः ।
शय्यम्भवो यशोभद्रः, सम्भूतविजयस्ततः ॥३३॥
भद्रबाहुः स्थूलभद्रः, श्रुतकेवलिनो हि षट् ।
महागिरिसुहस्त्याद्या, वज्रान्ता दशपूर्विणः ॥३४॥
इक्ष्वाकुकुलसम्भूताः, स्याद् द्वाविंशतिरर्हताम् ।
मुनिसुव्रतनेमी तु, हरिवंशसमुद्भवौ ॥३५॥
नाभिश्च जितशत्रुश्च, जितारिरथ संवरः ।
मेघो धरः प्रतिष्ठश्च, महासेननरेश्वरः ॥३६॥

सुग्रीव[९]श्च दृढरथो[१०], विष्णु[११]श्च वसुपूज्यराट्[१२]।
कृतवर्म्मा[१३] सिंहसेनो[१४], भानु[१५]श्च विश्वसेनराट्[१६] ॥३७॥
सूरः[१७] सुदर्शनः[१८] कुम्भः[१९], सुमित्रो[२०] विजयस्[२१]तथा।
समुद्रविजय[२२]श्चाश्वसेनः[२३] सिद्धार्थ[२४] एव च ॥३८॥
मरुदेवा[१] विजया[२] सेना[३] सिद्धार्था[४] च मङ्गला[५]।
ततः सुसीमा[६] पृथ्वी[७], लक्ष्मणा[८] रामा[९] ततः परम् ॥३९॥
नन्दा[१०] विष्णु[११]र्जया[१२] श्यामा[१३], सुयशाः[१४] सुव्रता[१५] चिरा[१६]।
श्री[१७]र्देवी[१८] प्रभावती[१९] च, पद्मा[२०] वप्रा[२१] शिवा[२२] तथा ॥४०॥
वामा[२३] त्रिशला[२४] क्रमतः, पितरो मातरोऽर्हताम्।
स्याद्गोमुखो[१] महायक्ष[२]स्त्रिमुखो[३] यक्षनायकः[४] ॥४१॥
तुम्बरुः[५] कुसुम[६]श्चापि, मातङ्गो[७] विजयो[८]ऽजितः[९]।
ब्रह्मा[१०] यक्षेट्[११] कुमारः[१२] षण्मुख[१३]पाताल[१४]किन्नराः[१५] ॥४२॥
गरुडो[१६] गन्धर्वो[१७] यक्षेट्[१८], कुबेरो[१९] वरुणो[२०]ऽपि च।
भृकुटि[२१]र्गोमेधः[२२] पार्श्वो[२३], मातङ्गो[२४]ऽर्हदुपासकाः ॥४३॥
चक्रेश्वर्य[१]जितबला[२], दुरितारि[३]श्च कालिका[४]।
महाकाली[५] श्यामा[६] शान्ता[७], भृकुटि[८]श्च सुतारका[९] ॥४४॥
अशोका[१०] मानवी[११] चण्डा[१२], विदिता[१३] चाङ्कुशा[१४] तथा।
कन्दर्पा[१५] निर्वाणी[१६] बला[१७], धारिणी[१८] धरणप्रिया[१९] ॥४५॥

नरदत्ताऽथ गान्धार्यम्बिका पद्मावती तथा ।
सिद्धायिका चेति जैन्य , क्रमाच्छासनदेवता ॥४६॥
वृषो गजोऽश्व प्लवग., क्रौञ्चोऽब्ज स्वस्तिक शशी ।
मकर ,श्रीवत्स खड्गी, महिष. शूकरस्तया ॥४७॥
श्येनो वज्र मृग छागो, नन्द्यावर्त्तो घटोऽपि च ।
कूर्मो नीलोत्पल शङ्ख , फणी सिंहोऽर्हता ध्वजा ॥४८॥

रक्तौ च पद्मप्रभवासुपूज्यौ,
शुक्लौ च चन्द्रप्रभपुष्पदन्तौ ।
कृष्णौ पुनर्नेमिमुनी विनीलौ,
श्रीमल्लिपार्श्वौ कनकत्विषोऽन्ये ॥४९॥

उत्सर्पिण्यामतीतायां, चतुर्विंशतिरर्हताम् ।
केवलज्ञानी निर्वाणी सागरोऽथ महायशा ॥५०॥
विमल सर्वानुभूति , श्रीधरो दत्ततीर्थकृत् ।
दामोदर सुतेजाश्च, स्वाम्यथो मुनिसुव्रत ॥५१॥
सुमति शिवगतिश्चैवाऽस्तागोऽथ निमीश्वर ।
अनिलो यशोधराख्य , कृतार्थोऽथ जिनेश्वर ॥५२॥
शुद्धमति शिवकर , स्यन्दनश्चाथ सम्प्रति. ।
भाविन्यान्तु पद्मनाभ , शूरदेव सुपार्श्वक ॥५३॥

स्वयंप्रभ[4]श्च सर्वानुभूति[5]र्देवश्रुतो[6]दयौ[7] ।
पेढालः[8] पोट्टिल[9]श्चापि, शतकीर्ति[10]श्च सुव्रतः[11] ॥५४॥
अममो[12] निष्कषाय[13]श्च, निष्पुलाको[14]ऽथ निर्ममः[15] ।
चित्रगुप्तः[16] समाधि[17]श्च, संवर[18]श्च यशोधरः[19] ॥५५॥
विजयो[20] मल्ल[21]देवौ[22] चानन्तवीर्य[23]श्च भद्रकृत्[24] ।
एवं सर्वावसर्प्पिण्युत्सर्प्पिणीषु जिनोत्तमाः ॥५६॥

तेषां च देहोऽद्भुतरूपगन्धो,
निरामयः स्वेदमलोज्झितश्च[1] ।
श्वासोऽब्जगन्धो[2] रुधिरामिषन्तु,
गोक्षीरधाराधवलं ह्यविस्रम्[3] ॥५७॥

आहारनीहारविधिस्त्वदृश्य[4]-
श्चत्वार एतेऽतिशयाः सहोत्थाः ।
क्षेत्रे स्थितिर्योजनमात्रकेऽपि,
नृदेवतिर्य्यग्जनकोटिकोटेः[1] ॥५८॥

वाणी नृतिर्य्यक्सुरलोकभाषा-
संवादिनी योजनगामिनी[2] च ।
भामण्डलं चारु च मौलिपृष्ठे,
विडम्बिताहर्पतिमण्डलश्रि[3] ॥५९॥

साग्रे च गव्यूतिशतद्वये रुजा
वैरेतयो मार्य्यतिवृष्ट्यवृष्ट्यः ।
दुर्भिक्षमन्यस्वकचक्रतो भयं
स्यान्नैत एकादश कर्म्मघातजा ॥६०॥

खे धर्मचक्रं चमराः सपाद-
पीठं मृगेन्द्रासनमुज्ज्वलञ्च ।
छत्रत्रयं रत्नमयो ध्वजोऽङ्घ्रि-
न्यासे च चामीकरपङ्कजानि ॥६१॥

वप्रत्रयं चारु चतुर्मुखाङ्गता,
चैत्यद्रुमोऽधोवदनाश्च कण्टकाः
द्रुमानतिर्दुन्दुभिनाद उच्चकै-
र्वातोऽनुकूलः शकुनाः प्रदक्षिणाः ॥६२॥

गन्धाम्बुवर्षं बहुवर्णपुष्प-
वृष्टिः कचश्मश्रुनखाप्रवृद्धिः ।
चतुर्विधामर्त्यनिकायकोटि-
र्जघन्यभावादपि पार्श्वदेशे ॥६३॥

ऋतूनामिन्द्रियार्थानामनुकूलत्वमित्यमी ।
एकोनविंशतिर्दिव्याश्चतुस्त्रिंशच्च मीलिता ॥६४॥

संस्कारवत्त्वम्[1]औदात्त्यम्[2]उपचारपरीतता[3] ।
मेघगम्भीरघोषत्वं[4], प्रतिनादविधायिता[5] ॥६५॥
दक्षिणत्वम्[6]उपनीतरागत्वं[7] च महार्थता[8] ।
अव्याहतत्वं[9] शिष्टत्वं[10], संशयानामसम्भवः[11] ॥६६॥
निराकृतान्योत्तरत्वं[12], हृदयङ्गमतापि[13] च ।
मिथः साकाङ्क्षता[14] प्रस्तावौचित्यं[15] तत्त्वनिष्ठता[16] ॥६७॥
अप्रकीर्णप्रसृतत्वम्[17]अस्वश्लाघान्यनिन्दिता[18] ।
आभिजात्यम्[19]अतिस्निग्धमधुरत्वं[20] प्रशस्यता[21] ॥६८॥

---

०१ संस्कृतादिलक्षणवत्त्वं । ०२ उच्चैर्वृत्तिता । ०३ उपचाररहितत्वं । ०४ मेघस्येव गम्भीरशब्दत्वं । ०५ प्रतिध्वनियुक्तत्वं । ०६ सरलत्वं । ०७ मालवकौशिक्यादिग्रामरागयुक्तत्वं। एते शब्दाश्रया वाग्गुणा ज्ञेयाः, अन्ये अर्थाश्रया वाग्गुणाः । ०८ बृहदभिधेयता । ०९ पूर्वापरवाक्यार्थाविरोधित्वादव्याहतत्वं । ०१० अभिमतसिद्धौ वक्तुर्मनोज्ञार्थप्रयोजकत्वं शिष्टतासूचकत्वं वा । ०११ असंदिग्धता । ०१२ परदूषणाविषयता । ०१३ हृदयग्राह्यत्वं । ०१४ परस्परेण पदानां वाक्यानां वा सापेक्षत्वं । ०१५ देशकालाव्यतीतत्वं । ०१६ विवक्षितवस्तुस्वरूपानुसारिता । ०१७ सुसम्बन्धस्य सतः प्रसरणं । ०१८ स्वश्लाघा- आत्मोत्कर्षः परनिन्दा च तयोर्विप्रयुक्तत्वं । ०१९ वक्तुः प्रतिपाद्यस्य वा भूमिकानुसारित्वं । ०२० घृतगुडादिवत् सुखकारित्वं । ०२१ प्राप्तश्लाघ्यता ।

अ[२२]मर्म्मवेधितौदार्य्यं[२३], धर्मार्थप्रतिबद्धता[२४] ।
कारकाद्यविपर्य्यासो[२५], विभ्रमादिवियुक्तता[२६] ॥६९॥
चित्रकृत्त्व[२७]मद्भुतत्व[२८], तथाऽनतिविलम्बिता[२९] ।
अनेकजातिवैचित्र्य[३०]मारोपितविशेषता[३१] ॥७०॥
सत्त्वप्रधानता[३२] वर्णपदवाक्यविविक्तता[३३] ।
अव्युच्छित्ति[३४]रखेदित्व[३५], पञ्चत्रिंशच्च वाग्गुणा ॥७१॥

अन्तराया दान[१]लाभ[२]वीर्य[३]भोगो[४]पभोगगा[५] ।
हासो[६] रत्य[७]रती[८] भीति[९]र्जुगुप्सा[१०] शोक[११] एव च ॥७२॥
कामो[१२] मिथ्यात्व[१३]मज्ञान[१४], निद्रा[१५] चाविरतिस्तथा[१६] ।
रागो[१७] द्वेषश्च[१८] नो दोषास्तेषामष्टादशाप्यमी ॥७३॥

---

०२२ अपरमर्मानुद्घाटनत्वम् । ०२३ अभिधेयस्यातुच्छता । ०२४ धर्मार्थाभ्यामनपेतत्व । ०२५ कारककालवचनलिङ्गादिविपर्य्यासराहित्य । ०२६ मनोदोषवियुक्तत्व । ०२७ उत्पादिताविच्छिन्नकुतूहलत्व । ०२८ प्रतीतत्व । ०२९ अनतिविलम्बिता प्रतीता । ०३० अनेकवर्णनीयवस्तुस्वरूपवर्णनसंश्रयादतिविचित्रत्व । ०३१ वचनान्तरापेक्षया आहितविशेषत्व । ०३२ साहसोपेतता । ०३३ वर्णपदवाक्यानां विच्छिन्नत्व । ०३४ विवक्षितार्थसम्यक्सिद्धिं अव्यवच्छिन्नवचनप्रमेयता । ०३५ अनायाससंभव ।

महानन्दोऽमृतं सिद्धिः, कैवल्यमपुनर्भवः ।
शिवं निःश्रेयसं श्रेयो, निर्वाणं ब्रह्म निर्वृतिः ॥७४॥
महोदयः सर्वदुःखक्षयो निर्वाणमक्षरम् ।
मुक्तिर्मोक्षोऽपवर्गोऽथ, मुमुक्षुः श्रमणो यतिः ॥७५॥
वाचंयमो यती साधुरनगार ऋषिर्मुनिः ।
निर्ग्रन्थो भिक्षुरस्य स्वं, तपोयोगशमादयः ॥७६॥
अभाषणं पुनर्मौनं, गुरुर्धर्मोपदेशकः ।
मोक्षोपायो योगो ज्ञानश्रद्धानचरणात्मकः ॥७७॥
अनुयोगकृदाचार्य, उपाध्यायस्तु पाठकः ।
अनूचानः प्रवचने, साङ्गेऽधीती गणिश्च सः ॥७८॥
शिष्यो विनेयोऽन्तेवासी, शैक्षः प्राथमकल्पिकः ।
सतीर्थ्यास्त्वेकगुरवो, विवेकः पृथगात्मता ॥७९॥
एकब्रह्मव्रताचारा, मिथः सब्रह्मचारिणः ।
स्यात्पारम्पर्यमाम्नायः, सम्प्रदायो गुरुक्रमः ॥८०॥
व्रतादानं परिव्रज्या, तपस्या नियमस्थितिः ।
अहिंसा सूनृताऽस्तेयब्रह्माकिञ्चनता यमाः ॥८१॥
नियमाः शौचसन्तोषौ, स्वाध्यायतपसी अपि ।
देवताप्रणिधानञ्च, करणं पुनरासनं ॥८२॥

प्राणायामे प्राणयमं, श्वासप्रश्वासरोधनम् ।
प्रत्याहारस्त्विन्द्रियाणां, विषयेभ्यः समाहृतिः ॥८३॥
धारणा तु क्वचिद्ध्येये, चित्तस्य स्थिरबन्धनम् ।
ध्यानन्तु विषये तस्मिन्नेकप्रत्ययसन्ततिः ॥८४॥
समाधिस्तु तदेवार्थमात्राभासनरूपकम् ।
एवं योगो यमाद्यङ्गैरष्टभिः सम्मतोऽष्टधा ॥८५॥
श्वःश्रेयसं शुभंशिवं कल्याणं श्वोवसीयसं श्रेयः ।
क्षेमं भावुकभविकंकुशलंमङ्गलंभद्रंमद्रंशस्तानि ॥८६॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां देवाधिदेवकाण्डः प्रथमः ॥१॥

## ॥ देवकाण्डः द्वितीयः ॥

स्वर्गस्त्रिविष्टपं द्योदिवौ भुवि स्तविषताविषौ नाकः ।
गौस्त्रिदिवमूर्ध्वलोकः सुरालयस्तत्सदस्त्वमराः ॥८७॥

देवाः सुपर्वसुरनिर्जरदेवतर्भु-
बर्हिर्मुखानिमिषदैवतनाकिलेखाः ।
वृन्दारकाः सुमनसस्त्रिदशा अमर्त्याः,
स्वाहा-स्वधा-क्रतु-सुधा-भुजे आदितेयाः ॥८८॥

गीर्वाणा मरुतोऽस्वप्ना, विबुधा दानवारयः ।
तेषां यानं विमानोऽन्धः, पीयूषममृतं सुधा ॥८९॥

असुरा नागास्तडितः सुपर्णका वह्नयोऽनिलाः स्तनिताः ।
उदधिद्वीपदिशो दश भवनाधीशाः कुमारान्ताः ॥९०॥

स्युः पिशाचा भूता यक्षा राक्षसाः किन्नरा अपि ।
किम्पुरुषा महोरगा, गन्धर्वा व्यन्तरा अमी ॥९१॥

ज्योतिष्काः पञ्च चन्द्रार्कग्रहनक्षत्रतारकाः ।
वैमानिकाः पुनः कल्पभवा द्वादश ते त्वमी ॥९२॥

सौधर्म्मे-शाने-सनत्कुमारमाहेन्द्र-ब्रह्मै-लान्तक-आँ ।
शुक्रै सहस्रारा-नतैप्राणत-औं आरणा-च्युतैजा ॥९४॥
कल्पातीता नव ग्रैवेयकौ पञ्च त्वनुत्तरौ ।
निकायभेदादेन स्युर्देवा किल चतुर्विधा ॥९४॥
आदित्यै सविताऽर्य्यमौ खरसहस्रोष्णांशुरंशू रवि[८],
मार्त्तण्डस्तैरणिर्गभस्तिरैरुणो[१२] भानुर्नभो-ऽर्ह्मणि[१५]: ।
सूर्योऽर्को[१७] किरणो[१८] भगो[१९] ग्रहपुंवं पुर्षो पतङ्गै खगो[२३],
मार्तण्डो यमुना-कृतान्तजनकौ प्रद्योतनस्तापनै ॥९५॥
ब्रध्नो हंसं श्चित्रभानुर्विवस्वान,
सूरस्त्वष्टा द्वादशात्मा च हेलि[३६] ।
मित्रो[३७] ध्वान्ताराति-रब्जा-शुं-हँस्त-
श्चक्राब्जौ-हँ-बान्धवै सप्तैसप्ति ॥९६॥
दिवा-दिना-ह-दिवस प्रभा-विभा-
भास -कैरै स्यान्मिहिरो[५२] विरोचनै ।
ग्रहा-ब्जिनी-गो-द्यु-पतिर्विकर्त्तनो[५८]
हैरि शुचीनौ गगना-ध्वजा-ध्वगौ[६३] ॥९७॥
हरिदश्वो[६४] जगत्कर्म-साक्षी[६६] भास्वान् विभावसु ।
त्रयीतनुर्जगच्चक्षुस्तपनोऽरुणसारथि[७२] ॥९८॥

रोचिरुस्रो रुचिः शोचिरंशुर्गो, ज्योतिरर्चिरुपधृत्यभीशवः ।
प्रग्रहः शुचिमरीचिदीधितयो, धामकेतुघृणिरश्मिपृश्नयः ॥९९॥
पाददीधितिकरद्युतिद्युतो, रुग्विरोककिरणत्विषित्विषः ।
भाः प्रभावसुगभस्तिभानवो भा मयूखमहसी छविर्विभा ॥
॥१००॥

प्रकाशस्तेज उद्योतः, आलोको वर्च आतपः ।
मरीचिका मृगतृष्णा, मण्डलं तूपसूर्यकम् ॥१०१॥
परिधिः परिवेषश्च, सूरसूतस्तु काश्यपिः ।
अनूरुर्विनतासूनुररुणो गरुडाग्रजः ॥१०२॥
रेवन्तस्त्वर्करेतोजः, प्लवगो हयवाहनः ।
अष्टादश माठराद्याः, सवितुः पारिपार्श्विकाः ॥१०३॥
चन्द्रमाः कुमुदबान्धवो दशश्वेतवाज्यमृतसूस्तिथिप्रणीः ।
कौमुदी-कुमुदिनी-भ-दक्षजा-रोहिणी-द्विज-निशौषधी-पतिः ॥
॥ १०४ ॥

जैवातृकोऽब्जश्च कला-शशै-ण-
च्छाया-भृदिन्दुर्विधुरत्रिदृग्जः ।
राजा निशो रत्नकरौ च चन्द्रः
सोमोऽमृत-श्वेत-हिम-द्युतिग्लौः ॥ १९ ॥

पोडशोऽंशो कला चिह्न, लक्षण लक्ष्म लाञ्छनम् ।
अङ्कं कलङ्कोऽभिज्ञानं, चन्द्रिका चन्द्रगोलिका ॥१०६॥
चन्द्रातप कौमुदी च, ज्योत्स्ना बिम्ब तु मण्डलम् ।
नक्षत्रं तारका ताराज्योतिषी भमुडु ग्रह ॥१०७॥
धिष्ण्यमृक्षमथाश्विन्यश्वकिनी दस्रदेवता ।
अश्वयुग् वालिनी चाथ, भरणी यमदेवता ॥१०८॥
कृत्तिका बहुलाश्चाग्निदेवा ब्राह्मी तु रोहिणी ।
मृगशीर्ष मृगशिरो, मार्गश्चान्द्रमस मृग ॥१०९॥
इल्वलास्तु मृगशिर शिर स्था पञ्च तारका ।
आर्द्रा तु कालिनी रौद्री, पुनर्वसू तु यामकौ ॥११०॥
आदित्यौ च पुष्यस्तिष्ये, सिध्यश्चे गुरुदैवतं ।
सार्पीश्लेषा मघा पित्र्यो, फाल्गुनी योनिदेवता॥१११॥
सा तूत्तरार्य्यमदेवा, हस्तं सवितृदेवतं ।
त्वाष्ट्री चित्राऽऽनिली स्वातिर्विशाखेन्द्राग्निदेवता॥११२॥
राधाऽनुराधा तु मैत्री, ज्येष्ठैन्द्री मूल आश्रपे ।
पूर्वाषाढाऽऽपी सोत्तरा, स्याद्वैश्वी श्रवणे पुन ॥११३॥

हरिदैवः श्रविष्ठा तु, धनिष्ठा वसुदेवता ।
वारुणी तु शतभिषग्जा-हिर्बुध्न-देवताः ॥११४॥
पूर्वोत्तरा भाद्रपदा, द्वय्यः प्रोष्ठपदाश्च ताः ।
रेवती तु पौष्णं दाक्षायण्यः सर्वाः शशिप्रियाः ॥११५॥
राशीनामुदयो लग्नं, मेषप्रभृतयस्तु ते ।
आरो वक्रो लोहिताङ्गो, मङ्गलोऽङ्गारकः कुजः ॥११६॥
आषाढाभूर्नवार्चिश्च, बुधः सौम्यः प्रहर्षुलः ।
ज्ञः पञ्चार्चिः श्रविष्ठाभः, श्यामाङ्गो रोहिणीसुतः ॥११७॥
बृहस्पतिः सुराचार्यो, जीवश्चित्रशिखण्डिजः ।
वाचस्पतिर्द्वादशार्चिर्धिषणः फाल्गुनीभवः ॥११८॥
गीर्बृहत्योः पतिरुतथ्यानुजाङ्गिरसौ गुरुः ।
शुक्रो मघाभवः काव्य, उशना भार्गवः कविः ॥११९॥
षोडशार्चिर्दैत्यगुरुर्धिष्ण्यः शनैश्चरः शनिः ।
छायासुतोऽसितः सौरिः, सप्तार्ची रेवतीभवः ॥१२०॥
मन्दः क्रोडो नीलवासाः, स्वर्भानुस्तु विधुन्तुदः ।
तमो राहुः सैंहिकेयो, भरणीभूरथाहिकः ॥१२१॥
अश्लेषाभूः शिखी केतुर्ध्रुवस्तूत्तानपादजः ।
अगस्त्योऽगस्तिः पीताब्धिर्वातापिद्विड् घटोद्भवः ॥१२२॥

मैत्रावरुणिराग्नेयं, और्वशेयाग्निमारुतौ ।
लोपामुद्रा तु तद्भार्या, कौषीतकी वरप्रदा ॥१२३॥
मरीचीप्रमुखा सप्तर्षयश्चित्रशिखण्डिनः ।
पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ ॥१२४॥
राहुग्रासोऽर्केन्द्वोर्ग्रह, उपरागे उपप्लवः ।
उत्लिङ्ग त्वरिष्ट स्यादुपसर्ग उपद्रवः । ॥१२५॥
अजन्यमीतिरुत्पातो, वन्ह्युत्पात उपाहितः ।
स्यात्काल समयो दिष्टानेहसौ सर्वमूषक ॥१२६॥
कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदत ।
सागरकोटीकोटीना, विंशत्या स समाप्यते ॥१२७॥
अवसर्पिण्या पडरा उत्सर्पिण्यामत एव विपरीता ।
एव द्वादशभिररैर्विवर्त्तते कालचक्रमिदम् ॥१२८॥
तत्रैकान्तसुषमोऽरश्चतस्र कोटिकोट्य ।
सागराणा सुषमा तु, तिस्रस्तत्कोटिकोट्य ॥१२९॥
सुषमदुष्षमा ते द्वे, दुष्षमसुषमा पुन ।
सैका सहस्रैर्वर्षाणा, द्विचत्वारिंशतोनिता ॥१३०॥
अथ दुष्षमैकविंशतिरब्दसहस्राणि तावती तु स्यात् ।
एकान्तदुष्षमापि ह्येतत्सङ्ख्या परेऽपि विपरीता ॥१३१॥

प्रथमेऽरत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः ।
त्रिद्व्येकगव्यूतोच्छ्रायास्त्रिद्व्येकदिनभोजनाः ॥१३२॥
कल्पद्रुफलसन्तुष्टाश्चतुर्थे त्वरके नराः ।
पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः ॥१३३॥
पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः ।
षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः ॥१३४॥
एकान्तदुःखप्रचिता, उत्सर्पिण्यामपीदृशाः ।
पश्चानुपूर्व्या विज्ञेया, अरेषु किल षट्स्वपि ॥१३५॥
अष्टादश निमेषाः स्युः, काष्ठा[1] काष्ठाद्वयं लवः[1] ।
कला[1] तैः पञ्चदशभिर्लेश[1]स्तद्द्वितयेन च ॥१३६॥
क्षण[1]स्तैः पञ्चदशभिः, क्षणैः षड्भिश्च नाडिका[1] ।
सा धारिका[2] च घटिका[3], मुहूर्त[1]स्तद्द्वयेन च ॥१३७॥
त्रिंशता तैरहोरात्र[1]स्तत्राह[1]र्दिवसो[2] दिनम्[3] ।
दिवं[4] द्यु[5]र्वासरो[6] घस्रः[7], प्रभातं[1] स्यादहर्मुखम्[2] ॥१३८॥
व्युष्टं[3] विभातं[4] प्रत्यूषं[5], कल्यं[6]प्रत्युषसी[7] उषः ।
काल्यं[8] मध्याह्न[1]स्तु दिवामध्यं[2] मध्यन्दिनं[3] च सः ॥१३९॥
दिनावसान[1]मुत्सूरो[2], विकाल[3]सबेली[4] अपि ।
सायं[5] सन्ध्या[1] तु पितृसू[2]स्त्रिसन्ध्यं[1] तूपवैणवम्[2] ॥१४०॥

श्राद्धकालस्तु कुतपोऽष्टमो भागो दिनस्य य ।
निशा निशीथिनी रात्रि, शर्वरी क्षणदा क्षपा ॥१४१॥
त्रियामा यामिनी भौती, तमी तमी विभावरी ।
रजनी वसती श्यामा, वासतेयी तमस्विनी ॥१४२॥
उषा दोषेन्दुकान्ताऽथ ,तमिस्रा दर्शयामिनी ।
ज्योत्स्नी तु पूर्णिमारात्रिर्गणरात्रो निशागण ॥१४३॥
पक्षिणी पक्षतुल्याभ्यामहोभ्या वेष्टिता निशा ।
गर्भक रजनीद्वन्द्व, प्रदोषो यामिनीमुखम् ॥१४४॥
यामं प्रहरो निशीथस्त्वर्धरात्रो महानिशा ।
उचन्द्रस्त्वपररात्रस्तमिस्र तिमिर तम ॥१४५॥
ध्वान्त भूच्छायोऽन्धकार, तमस समन्धान्धतं ।
तुल्यनक्तन्दिने काले, विषुवद्विषुव च तत् ॥१४६॥
पञ्चदशाहोरात्र स्यात्पक्ष स बहुलोऽसित ।
तिथि पुन कर्मवाटी, प्रतिपत्पक्षति समे ॥१४७॥

---

१ दिनमस्य योऽष्टमो भाग स श्राद्धकाल कुतपश्च उच्यते इत्यर्थ । दिनमस्य पुराणोक्तानि रौद्रादीनि भगान्तानि पञ्चदश मुहूर्तानि, तन्मध्ये गणनाक्रमेण योऽष्टमो मुहूर्त स कुतप उच्यते । तत्प्रयोजन च श्राद्धे, अन्यकर्मणि अष्टमो मुहूर्त अभिजिदाख्य एव ।

पञ्चदश्यौ यज्ञकालौ, पक्षान्तौ पर्वणी अपि ।
तत्पर्वमूलं भूतेष्टापञ्चदश्योर्यदन्तरम् ॥१४८॥
स पर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।
पूर्णिमा पौर्णमासी सा, राका पूर्णे निशाकरे ॥१४९॥
कलाहीने त्वनुमतिर्मार्गशीर्ष्याग्रहायणी ।
अमामावस्यमावस्या, दर्शः सूर्येन्दुसङ्गमः ॥१५०॥
अमावास्यामावासी च, सा नष्टेन्दुः कुहुः कुहूः ।
दृष्टेन्दुस्तु सिनीवाली, भूतेष्टा तु चतुर्दशी ॥१५१॥
पक्षौ मासो वत्सरादिर्मार्गशीर्षः सहः सहाः ।
आग्रहायणिकश्चाथ, पौषस्तैषः सहस्यवत् ॥१५२॥
माघस्तपाः फाल्गुनस्तु, फाल्गुनिकस्तपस्यवत् ।
चैत्रो मधुश्चैत्रिकश्च, वैशाखे राधमाधवौ ॥१५३॥
ज्येष्ठस्तु शुक्रोऽथाषाढः, शुचिः स्याच्छ्रावणो नभाः ।
श्रावणिकोऽथ नभस्यः, प्रौष्ठभाद्रपदः पदः ॥१५४॥
भाद्रश्चाप्याश्विने त्वाश्वयुजेषावथ कार्तिकः ।
कार्त्तिकिको बाहुलोर्जौ, द्वौ द्वौ मार्गादिकावृतुः ॥१५५॥
हेमन्तः प्रशलो रौद्रोऽथ शैषशिशिरौ समौ ।
वसन्त इष्यः सुरभिः, पुष्पकालो बलाङ्गकः ॥१५६॥

उष्णे उष्णागमो ग्रीष्मो, निदाघस्तप उष्मकः ।
वर्षास्तपात्यये प्रावृड्, मेघात्कालागमौ क्षरी ॥१५७॥
शरद् घनात्ययोऽथायन, शिशिराद्यैस्त्रिभिस्त्रिभि ।
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥१५८॥
स स-पर्य-नूदृभ्यो वर्षं, हायनोऽब्दः समाः शरत् ।
भवेत्पैत्रं त्वहोरात्र, मासेनाब्देन दैवतम् ॥१५९॥
दैवे युगसहस्रे द्वे, ब्राह्म कल्पौ तु ते नृणाम् ।
मन्वन्तरं तु दिव्याना, युगानामेकसप्ततिः ॥१६०॥
कल्पो युगान्तः कल्पान्तः, संहारः प्रलयः क्षयः ।
संवर्तः परिवर्तश्च, समसुप्तिर्जिहानकः ॥१६१॥
तत्कालस्तु तदात्वं स्यात्तज्ज सान्दृष्टिकं फलम् ।
आयतिस्तूत्तरः कालः, उदर्कस्तद्भव फलम् ॥१६२॥
व्योमान्तरिक्षं गगन घनाश्रयो,
विहायं आकाशमनन्तपुष्करे ।
अभ्रं सुरा-भ्रो-डु-मरु त्पथोऽम्बरं,
खं द्यौर्दिवौ विष्णुपदं वियन्नभः ॥१६३॥
नभ्राट् तडित्वान्मुदिरो घनाघनोऽ-
भ्रं धूमयोनिस्तनयित्नुमेघाः ।

जीमूतपर्जन्यवलाहका घनो ,
धाराधरो वाह-द-मुग्-धरा जलात् ॥१६४॥
कादम्बिनी मेघमाला, दुर्दिनं मेघजं तमः
आसारो वेगवान् वर्षो, वातास्तं वारि शीकरः ॥१६५॥
वृष्ट्यां वर्षणवर्षे तद्विघ्ने ग्राह-ग्रहावग्रात् ।
घनोपलस्तु करकः, काष्ठाऽऽशा दिग् हरित्ककुप् ॥१६६
पूर्वा प्राची दक्षिणाऽपाची प्रतीची तु पश्चिमा ।
अपराऽथोत्तरोदीची, विदिक् त्वपदिशं प्रदिक् ॥१६७॥
दिश्यं दिग्भववस्तुन्यपागपाचीनमुदगुदीचीनम् ।
प्राक् प्राचीनं च समे प्रत्यक् तु स्यात्प्रतीचीनम् ॥१६८॥
तिर्यग्दिशां तु पतय, इन्द्राग्नियमनैर्ऋताः ।
वरुणो वायुकुबेरावीशानश्च यथाक्रमम् ॥१६९॥
ऐरावतः पुण्डरीको , वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः, सुप्रतीकश्च दिग्गजाः ॥१७०॥
इन्द्रो हरिर्दुश्च्यवनोऽच्युताग्रजो,
वज्री विडौजा मघवान् पुरन्दरः ।
प्राचीनबर्हिः पुरुहूतवासवौ,
सङ्क्रन्दनाखण्डलमेघवाहनाः ॥१७१॥

सुत्रामवास्तोष्पतिर्हरिमेशक्रौ वृषौ सुनासीरसहस्रनेत्रौ
पर्जन्यहर्यश्वऋभुक्षिवाहुदन्तेयवृद्धश्रवसस्तुरापाट् ॥१७२॥

सुरर्षभस्तपस्तक्षो जिष्णुर्नरशतक्रतु ।
कौशिक पूर्वदिग्-देवाप्सर -स्वर्ग-शची-पति ॥१७३॥

पृतनाषाडुग्रधन्वा, मरुत्वान्मघवाऽस्य तु ।
द्विष पाकोऽद्रयो वृत्र , पुलोमा नमुचिर्बल ॥१७४॥

जम्भ प्रिया शचीन्द्राणी, पौलोमी जयवाहिनी ।
तनयस्तु जयन्त स्याज्जयदत्तो जयश्च स ॥१७५॥

सुता जयन्ती तविषी, ताविष्युच्चै श्रवा हय ।
मातली सारथिर्देवनन्दी द्वा स्थो गज पुन ॥१७६॥

ऐरावणोऽभ्रमातङ्गश्चतुर्दन्तोऽर्कसोदर ।
ऐरावतो हस्तिमल्ल , श्वेतगजोऽभ्रमुप्रिय ॥१७७॥

वैजयन्तौ तु प्रासादध्वजौ पूर्य्यमरावती ।
सरो नन्दीसर पर्षत्सुधर्मा नन्दन वनम् ॥१७८॥

वृक्षा कल्पे पारिजातो, मन्दारो हरिचन्दन ।
सन्तानश्च धनुर्देवायुध तदृजु रोहितम् ॥१७९॥

दीर्घज्जैरावतं वज्रं, त्वशनिर्ह्रादिनी स्वरुः ।
शतकोटिः पविः शम्बो, दम्भोलिर्भिदुरं भिदुः ॥१८०॥
व्याघामः कुलिशोऽस्यार्चिरतिभीः स्फूर्जथुर्ध्वनिः ।
स्ववैद्यावश्विनीपुत्रावश्विनौ वडवासुतौ ॥१८१॥
नासिक्यावर्कजौ दस्रौ, नासत्यावब्धिजौ यमौ ।
विश्वकर्मा पुनस्त्वष्टा, विश्वकृद्देववर्द्धकिः ॥१८२॥
स्वःस्वर्गिवध्वोऽप्सरसः, स्ववेंश्या उर्व्वशीमुखाः ।
हाहादयस्तु गन्धर्व्वा, गान्धर्व्वा देवगायनाः ॥१८३॥
यमः कृतान्तः पितृदक्षिणाशा-
प्रेतात्पतिर्दण्डधरोऽर्कसूनुः ।
कीनाशमृत्यू समवर्त्तिकालौ
शीर्णाङ्घ्रिहर्य्यन्तकधर्मराजाः ॥१८४॥
यमराजः श्राद्धदेवः, शमनो महिषध्वजः ।
कालिन्दीसोदरश्चापि, धूमोर्णा तस्य वल्लभा ॥१८५॥
पुरी पुनः संयमनी, प्रतीहारस्तु वैध्यतः ।
दासौ चण्डमहाचण्डौ, चित्रगुप्तस्तु लेखकः ॥१८६॥
स्याद्राक्षसः पुण्यजनो नृचक्षा

यौत्वाशरै कौणपयातुधानौ ।

रात्रिञ्चरो रात्रिचरः पलादः

कीनाशरक्षोनिकसात्मजाश्च ॥१८७॥

क्रव्यात्क्रव्यादोऽस्रपा नैकृतास्त्रपो

वरुणस्त्वर्णवमन्दिरः प्रचेताः ।

जलव्याद् पतिपाशिमन्नाद्या

जलकान्तार स्यात्परञ्जनश्च ॥१८८॥

श्रीदः सितोदरैकुहेशमखा पिशाच-

कीच्छागर्भुत्रिशिरः ऐडविलैकपिङ्गौ ।

पौलस्त्यवैश्रवणरत्नकरौ कुबेर-

यक्षौ नृधर्मधनदौ नरवाहनश्च ॥१८९॥

कैलासौकाः यक्ष-धन-निधि-किम्पुरुषे-श्वरः ।

विमान पुष्पकं चैत्ररथं वनं पुरी प्रभा ॥१९०॥

अलका वस्वोकसारा, सुतोऽस्य नलकूबरः ।

वित्तं रिक्थं स्वापतेयं, रा सारं विभवो वसु ॥१९१॥

---

( १ ) यातु यातुः। पुन्यपि, यदाह धनपालः "कल्यादा यातवो यातुधाना" इति ।

२ पुन्दपि, यदाह धनपालः "सारोऽर्थो द्रविणं धनं" ।

द्युम्नं द्रव्यं पृक्थं[10] मृक्थं[11], स्वं[12] ऋक्णं[13] द्रविणं[14] धनम्[15] ।
हिरण्या[16]र्थौ[17] निधानं तु, कुनाभिः[2] शेवधि[3]र्निधिः[4] ॥१९२॥
महापद्मश्च[1] पद्मश्च[2], शङ्खो[3] मकर[4]कच्छपौ[5] ।
मुकुन्द[6]कुन्द[7]नीलाश्च[8], चर्चाश्च[9] निधयो नव ॥१९३॥
यक्षः[1] पुण्यजनो[2] राजा[3], गुह्यको[4] वटवास्यपि[5] ।
किन्नरस्तु[1] किम्पुरुष[2]स्तुरङ्गवदनो[3] मयुः[4] ॥१९४॥
शम्भुः[1] शर्वः[2] स्थाणु[3]रीशान[4] ईशो[5],
रुद्रो[6]ऽड्डीशौ[7] वामदेवो[8] वृषाङ्कः[9] ।
कण्ठेकालः[10] शङ्करो[11] नीलकण्ठः[12],
श्रीकण्ठो[13]ग्रौ[14] धूर्जटि[15]र्भीम[16]-भर्गौ[17] ॥१९५॥
मृत्युञ्जयः[18] पञ्चमुखो[19][2]ऽष्टमूर्तिः[20],
श्मशानवेश्मा[21] गिरिशो[22] गिरीशः[23] ।
षण्ढः[24] कपर्दी[25]श्वर[26] ऊर्ध्वलिङ्ग[27],
एक-त्रि-दृक्[29] भालदृ[30]गेकपादः[31] ॥१९६॥

---

१ चर्चाः चर्चसौ चर्चसः इत्यादि । २ सद्योजातः १ वामदेवः २ अघोरः ३ तत्पुरुषः ४ ईशानः ५ति पञ्च मुखानि ।

[32] मृडोऽट्टहासी [33] घनवाहनो[34]ऽहि-
[35] र्बुध्नो [36] विरूपाक्ष[37]विषान्तकौ [38] च ।
[39] महाव्रतो वह्नि-हिरण्यरेता
[42] शिवो[43]ऽस्थिधन्वा पुरुषास्थिमाली[44] ॥१९७॥
स्याद् व्योमकेशः[45] शिपिविष्ट[46]भैरवौ,[47]
दिक्-कृत्ति-वासा[49] भवनीललोहितौ[50] [51] ।
[52] सर्वज्ञ-नाट्यप्रिय[53]खण्डपर्शवो,[54]
महापरा देव-नटे-श्वरौ हरे ॥१९८॥
पशु-प्रथम-भूतो-मा-पतिः [63] पिङ्ग[64]-जटेक्षणः ।
पिनाक-शूल-खट्वाङ्ग-गङ्गा-ऽही-न्दु-कपाल-भृत् ॥१९९॥
गज-पूष-पुरा-नङ्ग-काला-न्धक-मखाऽसुहृद् ।
कपर्दोऽस्य जटाजूटः, खट्वाङ्गस्तु सुखंसुण ॥२००॥
[1] पिनाकः स्यादाजगवं[3] अजकावं च तद्धनुः ।
ब्राह्म्याद्या मातरः सप्त, प्रमथाः पार्षदा गणाः ॥२०१॥
[1] अणिमा [2] वशिते[3]शित्वं, प्राकाम्यं [4] महिमोऽणिमा ।
[5] यत्र कामावसायित्वं, प्राप्तिरैश्वर्यमष्टधा ॥२०२॥

गौरी[१] काली[२] पार्वती[३] मातृमाता[४]-
ऽपर्णा[५] रुद्राण्य[६]म्बिका[७] त्र्यम्बि[८]कोमा[९] ।
दुर्गा[१०] चण्डी[११] सिंहयाना[१२] मृडानी[१३],
कात्यायन्यौ[१४] दक्षजा[१५]र्य्या[१६] कुमारी[१७] ॥२०३॥
सती[१८] शिवा[१९] महादेवी[२०], शर्व्वाणी[२१] सर्व्वमङ्गला[२२] ।
भवानी[२३] कृष्ण-मैनाक-स्वसा[२५] मेनाद्रिजेश्वरा[२७ २८] ॥२०४॥
निशुम्भ-शुम्भ-महिष-मथनी[३१] भूतनायिका[३२] ।
तस्याः सिंहो मनस्तालः, सख्यौ तु विजया[१] जया[१] ॥२०५॥
चामुण्डा[१] चर्च्चिका[२] चर्म्ममुण्डा[३] मार्ज्जारकर्णिका[४] ।
कर्णमोटी[५] महागन्धा[६], भैरवी[७] च कपालिनी ॥२०६॥
हेरम्बो[१] गण-विघ्नेशः[३], पशुपाणि[४]र्विनायकः[५] ।
द्वैमातुरो[६] गजास्यैकदन्तौ[८] लम्बोदराखुगौ[१०] ॥२०७॥
स्कन्दः[१] स्वामी[२] महासेनः[३], सेनानीः[४] शिखिवाहनः[५] ।
षाण्मातुरो[६] ब्रह्मचारी[७], गङ्गो-मा-कृत्तिका-सुतः ॥२०८॥
द्वादशाक्षो[११] महातेजाः[१२], कुमारः[१३] षण्मुखो[१४] गुहः[१५] ।
विशाखः[१६] शक्तिभृत्[१७] क्रौञ्च-तारकारिः[१९] शरा-ग्नि-भूः[२१] ॥२०९॥

भृङ्गी भृङ्गिरिटिर्भृङ्गिरिटिर्नाड्य-स्थि-विग्रहे ।
कूष्माण्डके केलिकिलो, नन्दीशे तण्डु-नन्दिनौ ॥२१०॥
द्रुहिणो विरिञ्चिर्द्रुघणो विरिञ्चिः,
परमेष्ठ्यजोऽष्टश्रवणः स्वयम्भूः ।
कमलः कविः सात्विकवेदगर्भौ,
स्थविरः शतानन्दपितामहौ कः ॥२११॥
धाता विधाता विधिवेधसौ ध्रुवे,
पुराणगो हंसगविश्वरेतसौ ।
प्रजापतिर्ब्रह्मचतुर्मुखो भवा-
न्तकृज्जगत्कर्तृसरोरुहासनौ ॥२१२॥
शम्भुः शतधृतिः स्रष्टा, सुरज्येष्ठो विरिञ्चनः ।
हिरण्यगर्भो लोकेशो, नाभि-जन्मा-त्म भूरपि ॥२१३॥
विष्णुर्जिष्णुर्जनार्दनो हरिर्हृषीकेशोऽच्युतः केशवो,
दाशार्हः पुरुषोत्तमोऽब्धिशयनोपेन्द्रावजेन्द्रानुजौ ।
विष्वक्सेननरकान्तकौ जलशयो नारायणः श्रीपति-
र्दैत्यारिः पुराण-यज्ञ पुरुषौ, पक्षिध्वजोऽधोक्षजः ॥२१४॥

गोविन्दपद्मबिन्दुमुकुन्दकृष्णाः, वैकुण्ठपद्मेशयपद्मनाभाः

वृषाकपिर्माधववासुदेवौ, विश्वम्भरः श्रीधरविश्वरूपौ ॥२१५

दामोदरः शौरिसनातनौ विधुः,

पीताम्बरो मार्जिनौ कुमोदकः ।

त्रिविक्रमो जन्हुचतुर्भुजौ पुन-

र्वसुः शतावर्त्तगदाग्रजौ स्वभूः ॥२१६॥

मुञ्जकेशिवनमालिपुण्डरीकाक्षबभ्रुशशबिन्दुवेधसः ।

पृश्निशृंगधरणीधरात्मभूपाण्डवार्थनसुवर्णबिन्दवः ॥२१७॥

श्रीवत्सो देवकीसूनुर्गोपेन्द्रो विष्टरश्रवाः ।

सोमसिन्धुजगन्नाथौ, गोवर्द्धनधरोऽपि च ॥२१८॥

यदुनाथो गदा-शार्ङ्ग-चक्र-श्रीवत्स-शङ्ख-भृत् ।

मधुधेनुकचाणूरपूतनायमलार्जुनाः ॥२१९॥

कालनेमिहयग्रीवशकटारिष्टकैटभाः ।

कंसकेशिमुराः साल्वमैन्दद्विविदराहवः ॥२२०॥

हिरण्यकशिपुर्बाणः, कालीयो नरको बलिः ।

शिशुपालश्चास्य वध्या, वैनतेयस्तु वाहनम् ॥२२१॥

मधुदीपमारौ मधुसारथिस्मरौ
विषमायुधो दर्पककामहृच्छयाः ॥२२७॥
प्रद्युम्नः श्रीनन्दनश्च, कन्दर्पः पुष्पकेतनः ।
पुष्पाण्यस्येषुचापास्त्राण्यरी शम्बरशूर्पकौ ॥२२८॥
केतनं मीनमकरौ, बाणाः पञ्च रतिः प्रिया ।
मनःशृङ्गारसङ्कल्पात्मानो योनिः सुहृन्मधुः ॥ २२९ ॥
सुतोऽनिरुद्ध ऋष्याङ्क, उषेशो ब्रह्मसूश्च सः ।
गरुडः शाल्मल्यरुणावरजो विष्णुवाहनम् ॥२३०॥
सौपर्णेयो वैनतेयः सुपर्णः
सर्पारातिर्वज्रजिद्वज्रतुण्डः ।
पक्षिस्वामी काश्यपिः स्वर्णकाय-
स्तार्क्ष्यः कामायुर्गरुत्मान् सुधाहृत् ॥२३१॥
बुद्धस्तु सुगतो धर्मधातुस्त्रिकालविज्जिनः ।
बोधिसत्त्वो महाबोधिरार्यः शास्ता तथागतः ॥२३२॥
पञ्चज्ञानः षडभिज्ञो, दशार्हो दशभूमिगः
चतुस्त्रिंशज्जातकज्ञो, दशपारमिताधरः ॥२३३॥
द्वादशाक्षो दशबलस्त्रिकायः श्रीघनाद्वयौ ।
समन्तभद्रः सङ्गुप्तो, दयाकूर्चो विनायकः ॥२३४॥

मार लोक-स्व-जिद्धर्मराजो विज्ञानमातृकः ।
महामैत्रो मुनीन्द्रश्च, बुद्धाः स्युः सप्त ते त्वमी ॥२३५॥
विपश्यी शिखी विश्वभूः, क्रकुच्छन्दश्च काञ्चनः ।
काश्यपश्च सप्तमस्तु, शाक्यसिंहोऽर्कबान्धवः ॥२३६॥
तथा राहुलसूः सर्वार्थसिद्धो गौतमान्वयः ।
माया शुद्धोदन-सुतो, देवदत्ताग्रजश्च सः ॥२३७॥
असुरा दितिदनुजाः, पातालौकःसुरारयः ।
पूर्वदेवाः शुक्रशिष्याः, विद्यादेव्यस्तु षोडश ॥२३८॥
रोहिणी प्रज्ञप्तिर्वज्रशृङ्खला कुलिशाङ्कुशा ।
चक्रेश्वरी नरदत्ता, काल्यथासौ महापरा ॥२३९॥
गौरी गान्धारी सर्वास्त्रमहाज्वाला च मानवी ।
वैरोट्याऽच्छुप्ता मानसी, महामानसिकेति ताः ॥२४०॥
वाग् ब्राह्मी भारती गौर्गीर्वाणी भाषा सरस्वती ।
श्रुतदेवी वचनं तु व्याहारो भाषितं वचः ॥२४१॥
सविशेषणमाख्यातं, वाक्यं स्यादाद्यन्तकं पदम् ।
राद्धसिद्धकृतेभ्योऽन्तः, आप्तोक्तिः समयागमौ ॥२४२॥
आचाराङ्गं सूत्रकृतं, स्थानाङ्गं समवाययुक् ।
पञ्चमं भगवत्यङ्गं, ज्ञाताधर्मकथापि च ॥२४३॥

उपासकान्तकृदनुत्तरोपपातिकादशाः ।
प्रश्नव्याकरणं चैव, विपाकश्रुतमेव च ॥२४४॥
इत्येकादश सोपाङ्गान्यङ्गानि द्वादशं पुनः ।
दृष्टिवादो द्वादशाङ्गी, स्याद्गणिपिटकाह्वया ॥२४५॥
परिकर्म्म- सूत्र-पूर्वानुयोग-पूर्वगत-चूलिकाः पञ्च ।
स्युर्दृष्टिवादभेदाः पूर्वाणि चतुर्दशापि पूर्वगते ॥२४६॥
उत्पादपूर्वमग्रायणीयमथ वीर्य्यतः प्रवादं स्यात् ।
अस्तेर्ज्ञानात्सत्यात्तदात्मनः कर्म्मणश्च परम् ॥२४७॥
प्रत्याख्यानं विद्याप्रवाद-कल्याण-नामधेये च ।
प्राणावायं च क्रियाविशालमथ लोकविन्दुसारमिति ।२४८
स्वाध्यायः श्रुतिराम्नायश्छन्दो वेदस्त्रयी पुनः ।
ऋग्यजुःसामवेदा. स्युरथर्वा तु तदुद्धृतिः ॥२४९॥
वेदान्तः स्यादुपनिषदोङ्कारप्रणवौ समौ ।
शिक्षा कल्पो व्याकरणं, छन्दो ज्योतिर्निरुक्तयः ॥२५०॥
षडङ्गानि धर्मशास्त्रं, स्यात् स्मृतिर्धर्म्मसंहिता ।
आन्वीक्षिकी तर्कविद्या, मीमांसा तु विचारणा ॥२५१॥
सर्गश्च प्रतिसर्गश्च, वंशो मन्वन्तराणि च ।
वंशानुवंशचरितं, पुराणं पञ्चलक्षणम् ॥२५२॥

षडङ्गी वेदाश्चत्वारो, मीमांसाऽन्वीक्षिकी[१२] तथा ।
धर्म्मशास्त्रं पुराणं च, विद्या एताश्चतुर्द्दश ॥२९३॥
सूत्रं सूचनकृद्भाष्यं सूत्रोक्तार्थप्रपञ्चकम् ।
प्रस्तावस्तु प्रकरणं, निरुक्तं पदभञ्जनम् ॥२९४॥
अवान्तरप्रकरणविश्रामे शीघ्रपाठन ।
आह्निकमधिकरणं त्वेकन्यायोपपादनम् ॥२९५॥
उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्त्तिकम् ।
टीका निरन्तरव्याख्या, पञ्जिका पदभञ्जिका ॥२९६॥
निबन्धवृत्ती अन्वर्थे, सग्रहस्तु समाहृति ।
परिशिष्टपद्धत्यादीनि, पथाऽनेन समुन्नयेत् ॥२९७॥
कारिका तु स्वल्पवृत्तौ, बहोरर्थस्य सूचनी ।
कलिन्दिका सर्वविद्या, निघण्टुर्नामसङ्ग्रहे ॥२९८॥
इतिहासः पुरावृत्तं, प्रवह्लिका प्रहेलिका ।
जनश्रुति किंवदन्ती, वार्त्तैतिह्यं पुरातनी ॥२९९॥

---

०१ अवान्तरप्रकरणाना विश्रामो ग्रन्थावयव इत्यर्थ । तदाह्निकमित्युच्यते, यदनेकार्थे "आह्निकं स्यात्पुराह्णनिर्वर्त्यं नित्यकर्मणि । भाजन ग्रन्थभाग चेति " ग्रन्थभाग-ग्रन्थावयवे इति सटीका । ०२ आदिग्रहणात् अध्याय उच्छ्वास अङ्क सर्ग इत्यादयो ग्रन्थावयवविशेषा ज्ञेया ।

वार्त्ता प्रवृत्तिर्वृत्तांत उदन्तोऽथाह्वयोऽभिधा ।
गोत्रसंज्ञानामधेयाख्याह्वाऽभिख्याश्च नाम च ॥२६०॥
सम्बोधनमामन्त्रणमाह्वानं त्वभिमन्त्रणम् ।
आकारणं हवो हूतिः, संहूतिर्बहुभिः कृता ॥२६१॥
उदाहार उपोद्घात, उपन्यासश्च वाङ्मुखम् ।
व्यवहारो विवादः स्यात्, शपथः शपनं शपः ॥२६२॥
उत्तरं तु प्रतिवचः, प्रश्नः पृच्छानुयोजनम् ।
कथङ्कथिकता चाथ, देवप्रश्न उपश्रुतिः ॥२६३॥
चटु चाटु प्रियप्रायं, प्रियसत्यं तु सूनृतम् ॥
सत्यं सम्यक् समीचीनमृतं तथ्यं यथातथम् ॥२६४॥
यथास्थितं च सद्भूतेऽलीके तु वितथानृते ।
अथ क्लिष्टं सङ्कुलं च, परस्परपराहतम् ॥२६५॥
सान्त्वं सुमधुरं ग्राम्यमश्लीलं म्लिष्टमस्फुटम् ।
लुप्तवर्णपदं ग्रस्तमवाच्यं स्यादनक्षरम् ॥२६६॥
अम्बूकृतं सथूत्कारे, निरस्तं त्वरयोदितम् ।
आम्रेडितं द्विस्त्रिरुक्तमबद्धं तु निरर्थकम् ॥२६७॥
पृष्ठमांसादनं तद्यत्, परोक्षे दोषकीर्त्तनम् ।
मिथ्याभियोगोऽभ्याख्यानं, सङ्गतं हृदयङ्गमम् ॥२६८॥

परुष निष्ठुर रूक्ष, विघुष्टमथ घोषणा ।
उच्चैर्घुष्ट वर्णनेडा, स्तव स्तोत्र स्तुतिर्नुति ॥२६९॥

श्लाघा प्रशसाऽर्थवादे , सा तु मिथ्या विकत्थनम् ।
जनप्रवादे कौलीन, विगान वचनीयता ॥२७०॥

स्यादवर्ण उपक्रोशो, वादो निष्पर्य्यपात् पर ।
गर्हणा धिक्क्रिया निन्दा, कुत्सा क्षेपा जुगुप्सनम् ॥२७१॥

आक्रोशाभीषङ्गाक्षेपा , शापे स क्षारणी रते ।
विरुद्धशसन गालिर्गीर्मङ्गलशासनम ॥ २७२ ॥

श्लोक कीर्तिर्यशोऽभिख्या, समाज्ञा ख्याती पुन ।
अशुभा वाक् शुभा कल्या चर्च्चरा चर्पटी समे ॥२७३॥
य सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ।
आपृच्छोऽऽलापे सम्भाषोऽनुलापे स्यान्मुहुर्वच ॥२७४॥

अनर्थक तु प्रलापो, विलापे परिदेवनम् ।
उल्लापे काकुवागन्योऽन्योक्ति सलापेसकवे ॥२७५॥
विप्रलापो विरुद्धोक्तिरपलापस्तु निह्नवे ।
सुप्रलापे सुवचन, सन्देशवाक्तु वाचिकम् ॥२७६॥

आज्ञा शिष्टिर्निराङ्निभ्यो देशो नियोगशासने ।
अववादोऽन्यथाहूय प्रेषणं प्रतिशासनम् ॥२७७॥

संवित्सन्धाऽऽस्थाऽभ्युपायः, संप्रत्याङ्भ्यः परः श्रवः ।
अङ्गीकारोऽभ्युपगमः, प्रतिज्ञाऽऽगूश्च सङ्गरः ॥२७८॥

गीतनृत्यवाद्यत्रयं, नाट्यं तौर्य्यत्रिकं च तत् ।
सङ्गीतं प्रेक्षणार्थेऽस्मिन्, शास्त्रोक्ते नाट्यधर्मिका ॥२७९॥

गीतं गानं गेयं गीतिर्गान्धर्वमथ नर्त्तनम् ।
नटनं नृत्यं नृत्तं च, लास्यं नाट्यं च ताण्डवम् ॥२८०॥

मण्डलेन तु यन्नृत्यं, स्त्रीणां हल्लीसकं हि तत् ।
पानगोष्ठ्यामुच्चतालं, रणे वीरजयन्तिका ॥२८१॥

स्थानं नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः ।
अङ्गहारोऽङ्गविक्षेपो, व्यञ्जकोऽभिनयः समौ ॥२८२॥

स चतुर्विध आहार्य्यो रचितो भूषणादिना ।
वचसा वाचिकोऽङ्गेनाङ्गिकः सत्त्वेन सात्त्विकः ॥२८३॥

स्यान्नाटकं प्रकरणं, भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ, वीथ्यङ्केहामृगा इति ॥२८४॥

अभिनेयप्रकारा स्युर्भाषा षट् संस्कृतादिका ।
भारती सात्वती कौशिक्यारभट्यौ च वृत्तय ॥२८५॥

वाद्यं वादित्रमातोद्यं, तूर्यं तूरं स्मरध्वज ।
ततं वीणाप्रभृतिकं, तालप्रभृतिकं घनं ॥२८६॥

वंशादिकं तु शुषिरमानद्धं मुरजादिकम् ।
वीणा पुनर्घोषवती, विपञ्ची कण्ठकूणिका ॥२८७॥

वल्लकी साऽथ तन्त्रीभि, सप्तभि परिवादिनी ।
शिवस्य वीणा नालम्बी, सरस्वत्यास्तु कच्छपी ॥२८८॥

नारदस्य तु महती गणानां तु प्रभावती ।
विश्वावसोस्तु बृहती, तुम्बुरोस्तु कलावती ॥२८९॥

चण्डालानां तु कण्डोलवीणा चाण्डालिका च सा ।
काय कोलम्बकस्तस्या, उपनाहो निबन्धनम् ॥२९०॥

दण्ड पुन प्रवाल स्यात्ककुभस्तु प्रसेवक ।
मूले वंशशलाका स्यात्कलिका कूणिकापि च ॥२९१॥

कालस्य क्रियया मानं, ताल साम्यं पुनर्लय ।
द्रुतं विलम्बितं मध्यमोघस्तत्त्वं घनं क्रमात् ॥२९२॥

मृदङ्गो मुरजः सोऽङ्क्यालिङ्ग्यूर्ध्वक इति त्रिधा ।
स्याद्यशःपटहो ढक्का, भेरी दुन्दुभिरानकः ॥२९३॥
पटहोऽथ शारिका स्यात्कोणो वीणादिवादनम् ।
शृङ्गारहास्यकरुणा, रौद्रवीरभयानकाः ॥२९४॥
बीभत्साद्भुतशान्ताश्च, रसा भावाः पुनस्त्रिधा ।
स्थायिसात्त्विकसञ्चारिप्रभेदैः स्याद्रतिः पुनः ॥२९५॥
रागोऽनुरागोऽनुरतिर्हासस्तु हसनं हसः ।
घर्घरो हासिका हास्यं, तत्रादृष्टरदे स्मितम् ॥२९६॥
वक्रोष्ठिकाऽथ हसितं, किञ्चिद्दृष्टरदाङ्कुरे ।
किञ्चिच्छ्रुते विहसितमट्टहासो महीयसि ॥२९७॥
अतिहासस्त्वनुस्यूतेऽपहासोऽकारणात्कृते ।
सोत्प्रासे त्वाच्छुरितकं, हसनं स्फुरदोष्ठके ॥२९८॥
शोकः शुक् शोचनं खेदः, क्रोधो मन्युः क्रुधा रुषा ।
क्रुत् कोपः प्रतिघो रोषो, रुट् चोत्साहः प्रगल्भता ।२९९।
अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका ।
अध्यवसाय ऊर्जोऽथ वीर्यं सोऽतिशयान्वितः ॥३००॥

भयं भीर्भीतिरातङ्क, आशङ्का साध्वसं दरः ।
भिया च तच्चाहिभयं, भूपतीनां स्वपक्षजम् ॥२०१॥
अदृष्टं वह्नितोयादेर्दृष्टं स्वपरचक्रजम् ।
भयङ्करं प्रतिभयं, भीमं भीष्मं भयानकम् ॥२०२॥
भीषणं भैरवं घोरं, दारुणं च भयावहम् ।
जुगुप्सा तु घृणाऽथ स्याद्विस्मयश्चित्रमद्भुतम् ॥२०३॥
चोद्याश्चर्ये शमः शान्तिः, शमथोपशमावपि ।
तृष्णाक्षये स्थायिनोऽमी, रसानां कारणं क्रमात् ॥२०४॥
स्तम्भो जाड्यं स्वेदो घर्मो निदाघः पुलकः पुनः ।
रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम् ॥२०५॥
रोमोद्गम उद्धुषणमुल्लकसनमित्यपि ।
स्वरभेदस्तु कल्लत्वं, स्वरे कम्पस्तु वेपथुः ॥२०६॥
वैवर्ण्यं कालिकाऽथाश्रु बाष्पो नेत्राम्बु रोदनम् ।
अश्रमस्रं प्रलयस्त्वचेष्टतेत्यष्ट सात्त्विकाः ॥२०७॥
धृतिः सन्तोषः स्वास्थ्यं स्यादाध्यानं स्मरणं स्मृतिः ।
मतिर्मनीषा बुद्धिर्धीर्धिषणा ज्ञप्तिचेतना ॥२०८॥

प्रतिभा प्रतिपत्प्रज्ञाप्रेक्षाचिदुपलब्धयः ।
संवित्तिः शेमुषी दृष्टिः, सा मेधा धारणक्षमा ॥२०९॥
पण्डा तत्त्वानुगा मोक्षे ज्ञानं विज्ञानमन्यतः ।
शुश्रूषा श्रवणं चैव, ग्रहणं धारणं तथा ॥२१०॥
ऊहोऽपोहोऽर्थविज्ञानं, तत्त्वज्ञानं च धीगुणाः ।
व्रीडा लज्जा मन्दाक्षं ह्रीस्त्रपा साऽपत्रपाऽन्यतः ॥२११॥
जाड्यं मौर्ख्यं विषादोऽवसादः सादो विषण्णता ।
मदो मुन्मोहसम्भेदो, व्याधिस्त्वाधी रुजाकरः ॥२१२॥
निद्रा प्रमीला शयनं, संवेश-स्वाप-संलयाः ।
नन्दीमुखी श्वासहेतिस्तन्द्रा सुप्तं तु साधिका ॥२१३॥
औत्सुक्यं रणरणकोत्कण्ठे आयल्लकारती ।
हल्लेखोत्कलिके चाथावहित्थाकारगोपनम् ॥२१४॥
शङ्काऽनिष्टोत्प्रेक्षणं स्याच्चापलं त्वनवस्थितिः : ।
आलस्यं तन्द्रा कौसीद्यं, हर्षश्चित्तप्रसन्नता ॥२१५॥
ह्लादः प्रमोदः प्रमदो, मुत्प्रीत्यामोदसम्मदाः ।
आनन्दानन्दथू गर्वस्त्वहङ्कारोऽवलिप्तता ॥२१६॥

दर्पोऽभिमानो ममता, मानश्चित्तोन्नतिः स्मयः ।
स मिथोऽहमहमिका, या तु सम्भावनाऽऽत्मनि ॥३१७॥

दर्पात्साऽहोपुरुषिका, स्यादहम्पूर्विका पुनः ।
अहं पूर्वमहं पूर्वमित्युग्रत्वं तु चण्डता ॥३१८॥

प्रबोधस्तु विनिद्रत्वं, ग्लानिस्तु बलहीनता ।
दैन्यं कार्पण्यं श्रमस्तु, क्लमः क्लेशः परिश्रमः ॥३१९॥

प्रयामोऽयामोऽभ्यायामो, उन्मादश्चित्तविभ्रमः ।
मोहो मौढ्यं चिन्ता ध्यानममर्षः क्रोधसम्भवः ॥३२०॥

गुणो जिगीषोत्साहवतां त्रासस्त्वाकस्मिकं भयम् ।
अपस्मारः स्यादावेशो, निर्वेदः स्वावमाननम् ॥३२१॥

आवेगस्तु त्वरिस्तूर्णिः, संवेगः सम्भ्रमस्त्वरा ।
वितर्कः स्यादूहनं, परामर्शो विमर्शनम् ॥३२२॥

अध्याहारस्तर्क ऊहोऽसूयाऽन्यगुणदूषणम् ।
मृतिः संस्था मृत्युकालौ, परलोकगमोऽत्ययः ॥३२३॥

पञ्चत्वं निधनं नाशो, दीर्घनिद्रा निमीलनम् ।
दिष्टान्तोऽस्तं कालधर्मोऽवसानं सा तु सर्वगा ॥३२४॥

मरको मारिस्त्रयस्त्रिंशदमी व्यभिचारिणः ।
स्युः कारणानि कार्य्याणि, सहचारीणि यानि च ॥३२५॥
रत्यादेः स्थायिनो लोके, तानि चेत्काव्यनाट्ययोः ।
विभावा[1] अनुभावाश्च[2], व्यभिचारिण[3] एव च ॥३२६॥

व्यक्तः स तैर्विभावाद्यैः, स्थायिभावो भवेद्रसः ।
पात्राणि[1] नाट्येऽधिकृतास्तत्तद्वेषस्तु भूमिका[1] ॥३२७॥

शैलूषो[1] भरतः[2] सर्वकेशी[3] भरतपुत्रकः[4] ।
धर्म्मीपुत्रो[5] रङ्गजायाऽऽजीवो[6-7] रङ्गावतारकः[8] ॥३२८॥

नटः[9] कृशाश्वी[10] शैलाली[11], चारणस्तु[1] कुशीलवः[2] ।
भ्र-भ्रु-भ्रू-भृ-परः कुंसो, नटः स्त्रीवेषधारकः ॥३२९॥
वेश्याचार्य्यः[1] पीठमर्दः[2], सूत्रधारस्तु[1] सूचकः ।
नन्दी[1] तु पाठको नान्द्याः, पार्श्वस्थः[1] पारिपार्श्विकः[2] ॥३३०॥

वासन्तिकः[1] केलिकिलो[2], वैहासिको[3] विदूषकः[4] ।
प्रहासी[5] प्रीतिदश्चाथ[6], पिङ्गः[1] पल्लविको[2] विटः[3] ॥३३१॥

पिता त्वावुक[1] आवुत्त-भावुकौ[1,2] भगिनीपतौ ।
भावो[1] विद्वान् युवराजः, कुमारो[1] भर्त्तृदारकः[2] ॥३३२॥

बाला वासूर्मार्षे आर्य्यो, देवो भट्टारको नृप ।
राष्ट्रियो नृपते श्यालो, दुहिता भर्तृदारिका ॥२३३॥
देवी कृताभिषेकाऽन्या भट्टिनी गणिकाऽज्जुका ।
नीचा चेटी सखीहूतौ हण्डे हञ्जे हला क्रमात् ॥२३४॥
अब्रह्मण्यमवध्योक्तौ, ज्यायसी तु स्वसाऽत्तिका ।
भर्त्ताऽऽर्य्यपुत्रो माताऽम्बा भदन्ता सौगतादयः ॥२३५॥
पूज्ये तत्रभवानत्रभवांश्च भगवानपि ।
पादौ भट्टारको देवे, प्रयोज्या पूज्यनामत ॥२३६॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालाया देवकाण्डो द्वितीय ॥२॥

# अभिधानचिन्तामणौ ।

## मर्त्यकाण्डः तृतीयः ।

मर्त्यः पञ्चजनो भूस्पृक्, पुरुषः पूरुषो नरः ।
मनुष्यो मानुषो ना विट्, मनुजो मानवः पुमान् ॥२३७॥
बालः पाकः शिशुर्डिम्भः, पोतः शावः स्तनन्धयः ।
पृथुकार्भोत्तानशयाः, क्षीरकण्ठः कुमारकः ॥२३८॥
शिशुत्वं शैशवं बाल्यं, वयस्थस्तरुणो युवा ।
तारुण्यं यौवनं वृद्धः, प्रवयाः स्थविरो जरन् ॥२३९॥
जरी जीर्णो यातयामो, जीनोऽथ विस्रसा जरा ।
वार्द्धकं स्थाविरं ज्यायान्, वर्षीयान् दशमीत्यपि ॥२४०॥
विद्वान् सुधीः कविविचक्षणलब्धवर्णाः
ज्ञः प्राप्तरूपकृतिकृष्ट्यभिरूपधीराः ।
मेधाविकोविदविशारदसूरिदोष-
ज्ञाः प्राज्ञपण्डितमनीषिबुधप्रबुद्धाः ॥२४१॥

व्यक्तो विपश्चित्संख्यावान् सन् प्रवीणे तु शिक्षिते।
निष्णातो निपुणो दक्षे, कर्म्म-हस्त-मुखा कृतात् ।३४२॥

कुशलश्चतुरोऽभिज्ञविज्ञवैज्ञानिका पटु ।
छेको विदग्धे प्रौढस्तु, प्रगल्भे प्रतिभान्विते ॥३४३॥

कुशाग्रीयमति सूक्ष्मदर्शी तत्कालधी पुन ।
प्रत्युत्पन्नमतिर्दूराद्य पश्येद्दीर्घदर्श्यसौ ॥३४४॥

हृदयालु सहृदयश्चिद्रूपोऽप्यथ संस्कृते ।
व्युत्पन्नप्रहतक्षुण्णा, अन्तर्वाणिस्तु शास्त्रवित् ॥३४५॥

वागीशो वाक्पतौ वाग्मी, वाचोयुक्तिपटु प्रवाक् ।
समुखो वावदूकोऽथ वदो वक्तो वदावदे ॥३४६॥

स्याद् जल्पाकस्तु वाचालो, वाचाटो बहुगर्ह्यवाक् ।
यद्वदोऽनुत्तरे दुर्वाक् कद्वदे स्यादथाघरे ॥३४७॥

हीनवादिन्येडमूकोनेडमूको त्वनाक्श्रुतौ ।
खणे शब्दनस्तुल्यौ, कुवादकुचरौ समौ ॥३४८॥

लोहलोऽस्फुटवाग् मूकोऽवागसौम्यस्वरोऽस्वरे ।
वक्तितो विद्रुरो निन्दुर्वन्दारुस्त्वभिवादके ॥३४९॥

आशंसु[१]राशंसितरि[२], कद्वर[१]स्त्वतिकुत्सितः[२] ।
निराकरिष्णुः[१] क्षिप्नुः[२] स्याद्विकासी[१] तु विकस्वरः[२] ॥२५०॥

दुर्मुखे[१] मुखरा[२]बद्धमुखौ[३] शक्लः[१] प्रियंवदः[२] ।
दानशीलः[१] सवदान्यो[२], वदन्यो[३]ऽप्यथ बालिशः[१] ॥२५१॥

मूढो[२] मन्दो यथाजातो[४], बालो[५] मातृमुखो जडः[७] ।
मूर्खो[८]ऽमेधो[९] विवर्णाज्ञौ[१०, ११], वैधेयो[१२] मातृशासितः[१३] ॥२५२॥

देवानांप्रिय[१४]जाल्मौ[१५] च, दीर्घसूत्र[१]श्चिरक्रियः[२] ।
मन्दः क्रियासु कुण्ठः[१] स्यात्, क्रियावान्[१] कर्म्मसूद्यतः ॥२५३॥

कर्म्मक्षमो[१]ऽलङ्कर्म्मीणः[२], कर्म्मशूरस्तु[१] कर्म्मठः[२] ।
कर्म्मशीलः[१] कार्म्म[२] आयःशूलिक[१]स्तीक्ष्णकर्म्मकृत्[२] ॥२५४॥

सिंहसंहननः[१] स्वङ्गः[२], स्वतन्त्रो[१] निरवग्रहः[२] ।
यथाकामी[३] स्वरुचिश्च[४], स्वच्छन्दः[५] स्वैर्य[६]पावृतः[७] ॥२५५॥

यदृच्छा[१] स्वैरिता[२] स्वेच्छा[३], नाथवान्[१] निघ्न[२]गृह्यकौ[३] ।
तन्त्रा[४]यत्त[५]वशा[६]धीन[७]च्छन्द[८]वन्तः[१] परात्परे ॥२५६॥

लक्ष्मीवान्[१] लक्ष्मणः[२] श्रीलः[३], इभ्य[१] आढ्यो[२] धनीश्वरः[३, ४] ।
ऋद्धो[५] विभूतिः[१] संपत्ति[२]र्लक्ष्मीः[३] श्रीर्[४]ऋद्धि[५]सम्पदः[६] ॥२५७॥

दरिद्रो दुर्विधो दुःस्थो, दुर्गतो निःस्वकीकटौ ।
अकिञ्चनोऽधिपस्त्वीशो, नेता परिवृढोऽधिभूः ॥३५८॥
पतीन्द्रस्वामिनाथार्य्याः प्रभुर्भर्त्तेश्वरो विभुः ।
ईशितेनो नायकश्च, नियोज्यः परिचारकः ॥३५९॥
डिङ्गरः किङ्करो भृत्यश्चेटो गोप्यः पराचितः ।
दासः प्रेष्यः परिस्कन्दो, भुजिष्यपरिकर्म्मिणौ ॥३६०॥
पराद्धिः परपिण्डादः, परजातः परैधितः ।
भृतको भृतिभुग् वैतनिकः कर्म्मकरोऽपि च ॥३६१॥
स निर्भृतिः कर्म्मकरो, भृतिः स्यान्निष्क्रयः पणः ।
कर्म्मण्या वेतनं मूल्यं, निर्वेशो भरणं विधा ॥३६२॥
भर्म्मण्या भर्म भर्न्या च, भोगस्तु गणिकाभृतिः ।
खल्पूः स्याद्बहुकरो, भारवाहस्तु भारिकः ॥३६३॥
वार्त्तावहो वैवधिको, भारो विवधवीवधौ ।
काचः शिक्यं तदालम्बो, भारयष्टिर्विहङ्गिका ॥३६४॥
शूरश्चारभटो वीरो, विक्रान्तश्चाथ कातरः ।
दरितश्चकितो भीतो, भीरुर्भीरुकभीलुकौ ॥३६५॥

विहस्तव्याकुलौ व्यग्रे, कान्दिशीको भयद्रुते ।
उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥२६६॥

महेच्छे तुङ्गटोदारौ, दान्तोदीर्णमहाशयाः ।
महामना महात्मा च, कृपणस्तु मितम्पचः ॥२६७॥

कीनाशस्तद्धनः क्षुद्रकदर्य्यदृढमुष्टयः ।
किम्पचानो दयालुस्तु, कृपालुः करुणापरः ॥२६८॥

सूरतोऽथ दया शूकः, कारुण्यं करुणा घृणा ।
कृपानुकम्पानुक्रोशो, हिंस्रे शरारुघातुकौ ॥२६९॥

व्यापादनं विशरणं प्रमयः प्रमापणं,
निर्ग्रन्थनं प्रमथनं कदनं निबर्हणम् ।
निस्तर्हणं विशसनं क्षणनं परासनं,
प्रोज्जासनं प्रशमनं प्रतिघातनं वधः ॥२७०॥

प्रवासनोद्वासनघातनिर्व्वासनानि संज्ञप्तिनिशुम्भहिंसाः ।
निर्व्वापणालम्भनिसूदनानि, निर्य्यातनोन्मन्थसमापनानि
॥२७१॥

अपासन वर्जनमारपिञ्जा, निष्कारणाक्राथविशारणानि ।
स्यु कर्त्तने कल्पनं वैर्द्धने च, छेदश्च घातोद्यत आततायी ॥

स शैर्षच्छेदिक शीर्षच्छेद्यो यो वधमर्हति ।
प्रमीतं उपसम्पन्नं, परेतप्रेतमस्थितौ ॥३७३॥

नामालेख्य-यशः-शेषो, व्यापन्नोऽपगतो मृतं ।
परासुरन्तदेहे दान, तदर्यमौर्ध्वदेहिकम् ॥३७४॥

मृतस्नानमपस्नानं, निवापः पितृतर्पणम् ।
चितिचित्याचिताश्च तुल्या, ऋजुस्तु प्राञ्जलोऽञ्जस ॥३७५॥

दक्षिणे सरलोदारौ, शठस्तु निकृतोऽनृजु ।
क्रूरे नृशंसनिस्त्रिंशपापौ धूर्त्तस्तु वञ्चकः ॥३७६॥
व्यसकः कुहकौ दाण्डाजिनिको मायिजालिकौ ।
मायी तु शठता शाठ्यं, कुसृतिर्निकृतिश्च सा ॥३७७॥
कपटं कैतवं दम्भं, कूटं छद्मोपधिव्याजम् ।
व्यपदेशो मिषं लक्ष, निभ व्याजोऽथ कुक्कुटि ॥३७८॥
कुहना दम्भचर्या च, वञ्चनं तु प्रतारणम् ।
व्यलीकेऽमतिसन्धानं, सार्वो सम्यार्य्यसज्जनौ ॥३७९॥

दोषैकदृक्[1] पुरोभागी[2], कर्णेजपस्तु[1] दुर्जनः[2] ।
पिशुनः[3] सूचको[4] नीचो[5], द्विजिह्वो[6] मत्सरी[7] खलः[8] ॥३८०॥
व्यसनार्त्तस्तूपरक्तश्चोरस्तु[1] प्रतिरोधकः[2] ।
दस्युः[3] पाटच्चरः[4] स्तेनस्[5]तस्करः[6] पारिपन्थिकः[7] ॥३८१॥
परिमोषि[8]परास्कन्द्य[9]ऐकागारिक[10]मलिम्लुचाः[11] ।
यः पश्यतो हरेदर्थं, स चोरः पश्यतोहरः[1] ॥३८२॥
चौर्यं[1] तु चौरिका[2] स्तेयं[3], लोप्त्रं[1] त्वपहृतं धनम् ।
यद्भविष्यो[1] दैवपरो[2]ऽथालस्यः[1] शीतको[2]ऽलसः[3] ॥३८३॥
मन्दस्[4]तुन्दपरिमृजो[5]ऽनुष्णो[6] दक्षस्तु[1] पेशलः[2] ।
पटूष्णोष्णकसूत्थानचतुराश्चाथ तत्परः[1] ॥३८४॥
आसक्तः[2] प्रवणः[3] प्रह्वः[4], प्रसितश्च[5] परायणः[6] ।
दातोदारः[1] स्थूललक्षदानशौण्डौ[2] बहुप्रदे[3] ॥३८५॥
दानमुत्सर्जनं[2] त्यागः[3], प्रदेशन[4]विसर्जने[5] ।
विहायितं[6] वितरणं[7], स्पर्शनं[8] प्रतिपादनम्[9] ॥३८६॥
विश्राणनं[10] निर्वपणमपवर्जनमंहतिः[13] ।
अर्थव्ययज्ञः[1] सुकलो[2], याचकस्तु[1] वनीपकः[2] ॥३८७॥
मार्गणो[3]ऽर्थी[4] याचनकस्[5]तर्कुको[6]ऽथार्थनैषणा[2] ।
अर्दना[3] प्रणयो[4] याञ्चा[5], याचना[6]ऽध्येषणा[7] सनिः[8] ॥३८८॥

उत्पतिष्णुस्तूत्पतिताऽलङ्करिष्णुस्तु मण्डनः ।
भविष्णुर्भविता भूष्णुः, समौ वर्त्तिष्णुवर्त्तनौ ॥३८९॥

विसृत्वरो विसमरः, प्रसारी च विसारिणि ।
लज्जाशीलोऽपत्रपिष्णुः, सहिष्णुः क्षमिता क्षमः ॥३९०॥

तितिक्षुः सहनः क्षन्ता, तितिक्षुः सहनः क्षमी ।
ईर्ष्यालुः कुहनोऽक्षान्तिरीर्ष्यो क्रोधी तु रोषणः ॥३९१॥

अमर्षणः क्रोधनश्च, चण्डस्त्वत्यन्तकोपनः ।
बुभुक्षितः स्यात् क्षुधितो, जिघत्सुरशनायितः ॥३९२॥

बुभुक्षायामशनाया, जिघत्सा रोचको रुचिः ।
पिपासुस्तृषितस्तृष्णक्, तृष्णी तर्षोऽप्युदन्यितः ॥३९३॥

पिपासा तृट् तृषोदन्या, धीतिः पानेऽथ शोषणम् ।
रसादानं भक्षकस्तु, घस्मरोऽद्मर आदिनः ॥३९४॥

भक्तमन्नं कूरमन्धो, भिस्सा दीदिविरोदनः ।
अशनं जीवनकं च, याजो वाजः प्रसादनम् ॥३९५॥

भिस्सटा दग्धिका सर्वरसाग्रं मण्डमत्र तु ।
दधिजे मस्तु मस्तोत्थे, निस्रावाचाममासरौ ॥३९६॥

श्राणा[1] विलेपी[2] तरला[3], यवागू[4]रुष्णिकापि च ।
सूपः[1] स्यात्प्रहितं[2] सूदो[3], व्यञ्जनं[1] तु घृतादिकम् ॥३९७॥

तुल्यौ तिलान्ने कृसर[1]त्रिसरा[2]वथ पिष्टकः[1] ।
पूपो[2]ऽपूपः[3] पूलिका[1] तु, पोलिका[2] पोलि[3]-पूपिकाः[4] ॥३९८॥

पूपल्य[5]थेषत्पक्वे स्युरभ्युषा[1]भ्योष[2]पौल्यः[3] ।
निष्ठानं[1] तु तेमनं[2] स्यात्करम्भो[1] दधिसक्तवः ॥३९९॥

घृतपूरो घृतवरः[2], पिष्टपूरश्च[3] वार्त्तिकः[4] ।
चमसी[1] पिष्टवर्त्तिः[2] स्याद्वटक[1]स्त्ववसेकिमः[2] ॥४००॥

भृष्टा यवाः पुनर्धाना[1], धानाचूर्णं[1] तु सक्तवः[1] ।
पृथुक[1]श्चिपिट[2]स्तुल्यौ, लाजाः[1] स्युः पुनरक्षताः[2] ॥४०१॥

गोधूमचूर्णे समिता[1], यवक्षोदे तु चिक्कसः[1]।
गुडे[1] इक्षुरसक्वाथः, शर्करा[1] तु सितोपला[2] ॥४०२॥

सिता[3] च मधुधूलि[4]स्तु, खण्ड[1]स्तद्विकृतिः पुनः ।
मत्स्यण्डी[1] फाणितं[2] चापि, रसालायां[1] तु मार्जिता[2] ॥४०३॥

शिखरिण्य[3]थ यूर्[1]यूषो[2], रसो[3] दुग्धं[1] तु सोमजम्[2] ।
गोरसः[3] क्षीर[4]मूधस्यं[5], स्तन्यं[6] पुंसवनं[7] पयः ॥४०४॥

पर्यस्य घृतद्व्यादि, पेयूषोऽभिनव पय ।
उभे क्षीरस्य विकृती, किलाटी कूर्चिकापि च ॥४०५॥

पायेस परमान्न च, क्षैरेयी क्षीरज दधि ।
गोरसश्च तदघन, द्रप्स पत्रेलमित्यपि ॥४०६॥

घृत हविर्व्यमाज्य च, हैविरावारसर्पिषी ।
हूवीगोदोहोद्भव हैयङ्गवीन शरज पुन ॥४०७॥

दधिसार तक्रसार, नवनीत नवोद्धृतम् ।
दण्डाहते कालशेयमोलौरिष्टानि गोरसे ॥४०८॥

रसायनमयावार्म्युदश्वित् श्वेत समोदकम् ।
तक्र पुन पादजल, मथित वारिवर्जितम् ॥४०९॥

सार्पिष्क दाधिक सर्पिर्दधिभ्या सस्कृत क्रमात् ।
लवणोदकाभ्या तु दकलावणिकमुदश्विति ॥४१०॥

औदश्विनमौदश्वित्क, लवणे स्यात्तु लावणम् ।
पैठरोख्ये उखासिद्धे, प्रयस्त तु सुसस्कृतम् ॥४११॥

पक्के राद्ध च सिद्ध च, भृष्ट पक्क विनाम्बुना ।
भृष्टामिप भटित्र स्याद्भूतिर्भल्टक च तत् ॥४१२॥

शूल्यं शूलाकृतं मांसं, निष्काथो रसकः समौ ।
प्रणीतमुपसम्पन्नं, स्निग्धे मसृणचिक्कणे ॥४१३॥
पिच्छिलं तु विजिविलं, विज्जलं विजिलं च तत् ।
भावितं तु वासितं स्यात्तुल्ये संमृष्टशोधिते ॥४१४॥
काञ्चिकं काञ्जिकं धान्याम्लारनाले तुषोदकम् ।
कुल्माषाभिषुतावन्तिसोमशुक्तानि कुञ्जलम् ॥४१५॥
चुक्रं धातुघ्नमुन्नाहं, रक्षोघ्नं कुण्डगोलकम् ।
महारसं सुवीराम्लं, सौवीरं म्रक्षणं पुनः ॥४१६॥
तैलं स्नेहोऽभ्यञ्जनं च, वेसवार उपस्करः ।
स्यात्तिन्तिडीकं तु चुक्रं, वृक्षाम्लं चाम्लवेतसः ॥४१७॥
हरिद्रा काञ्चनी पीता, निशाख्या वरवर्णिनी ।
क्षवः क्षुताभिजननो, राजिका राजसर्षपः ॥४१८॥
आसुरी कृष्णिका चासौ, कुस्तुम्बुरु तु धान्यकम् ।
धन्या धन्याकं धान्याकं, मरिचं कृष्णमूषणम् ॥४१९॥
कोलकं वेल्लजं धर्मपत्तनं यवनप्रियम् ।
शुण्ठी महौषधं विश्वा, नागरं विश्वभेषजम् ॥४२०॥

वैदेही पिप्पली कृष्णोपकुल्या मागधी कणा,
तन्मूल ग्रन्थिकं सर्व्वग्रन्थिकं चटकाशिरः ॥४२१॥

त्रिकटु त्र्यूषणं व्योषमजाजी जीरकः कणा ।
सहस्रवेधि वाल्हीकं, जतुकं हिङ्गु रामठम् ॥४२२॥

स्यादे स्वदनं खादनमशनं, निघसो वल्भनमभ्यवहारः ।
जग्धिर्जक्षणमक्षणं लेहो, प्रत्यवसानं घसिराहारः ॥४२३॥

प्सानं चर्व्वणं विघ्साणं, भोजनं जेमनौदने ।
चर्व्वणं चूर्णनं दन्तैर्जिह्वास्वादस्तु लेहनम् ॥४२४॥

कल्यवर्त्तं प्रातराशः, सग्धिस्तु सहभोजनम् ।
ग्रासो गुडेरकः पिण्डो, गटोलः कवलो गुडः ॥४२५॥

गण्डोलः कवलस्तृप्तं, त्वाघ्रातसुहितौ शितौ ।
तृप्ति सौहित्यमाघ्राणमथ भुक्तसमुज्झितं ॥४२६॥

फेला पिण्डोलि फेली च, स्योदरपूरके पुनः ।
कुक्षिम्भरिरात्मम्भरिस्तुन्दम्भरिरिप्यय ॥४२७॥

आद्यूनः स्यादौदरिकः, विजिगीषाविवर्जिते ।
उदरपिशाचः सर्व्वान्नीनः सर्व्वान्नभक्षकः ॥४२८॥

शाष्कुलः पिशिताश्युन्मदिष्णुस्तून्मादसंयुतः ।
गृध्नुस्तु गर्द्धनस्तृष्णक्, लिप्सुर्लुब्धोऽभिलाषुकः ॥४२९॥

लोलुपो लोलुभो लोभस्तृष्णा लिप्सा वशः स्पृहा ।
काङ्क्षाऽऽशंसा गर्द्धवाञ्छाऽऽशेच्छेहा तृड्मनोरथाः ॥४३०॥

कामोऽभिलाषोऽभिध्या तु, परस्वेहोद्धतः पुनः ।
अविनीतो विनीतस्तु, निभृतः प्रसृतोऽपि च ॥४३१॥

विधेये विनयस्थः स्यादाश्रवो वचने स्थितः ।
वश्यः प्रणेयो धृष्टस्तु, वियातो धृष्णुधृष्णजौ ॥४३२॥

वीक्षापन्नो विलक्षोऽथाधृष्टे शालीनशारदौ ।
शुभंयुः शुभसंयुक्तः, स्यादहंयुरहङ्कृतः ॥४३३॥

कामुकः कमिता कम्रोऽनुकः कामयिताऽभिकः
कामनः कमरोऽभीकः, पञ्चभद्रस्तु विप्लुतः ॥४३४॥

व्यसनी हर्षमाणस्तु, प्रमना हृष्टमानसः ।
विकुर्वाणो विचेतास्तु, दु-रन्तर्वि-परो मनाः ॥४३५॥

---

०१ सृ गतौ, क्तप्रत्ययेऽनुस्वारेत्त्वान्नेट् "तस्यैव मेऽनुक्तता प्रसृतस्य हतैनस, इति भागवतम्" प्रसृतस्य विनीतस्येति तट्टीका ।

मत्ते शौण्डोत्कटक्षीबो, उत्कस्तूत्सुके उन्मनो ।
उत्कण्ठितोऽभिशस्ते तु, वाच्यक्षारितदूषितो ॥४३६॥

गुणे प्रतीते स्याहतलक्षणे कृतलक्षणे ।
निर्लक्षणस्तु पाण्डुरपृष्ठे सङ्कसुकोऽस्थिरे ॥४३७॥

तूष्णींशीलस्तु तूष्णीको, विवशोऽनिष्टदुष्टधी ।
बद्धो निगडितो नद्धं, कीलितो यन्त्रितं सितं ॥४३८॥

सन्दानितं सम्यतश्च, स्यादुद्दानं तु बन्धनम् ।
मनोहते प्रतिहते, प्रतिबद्धो हतश्च स ॥४३९॥

प्रतिक्षिप्तोऽधिक्षिप्तोऽवकृष्टनिष्कासितौ समौ ।
आत्तगन्धेऽभिभूतोऽपध्वस्ते न्यक्कृतधिक्कृतौ ॥४४०॥

निकृतस्तु विप्रकृतो, न्यक्कारस्तु तिरस्क्रिया ।
परिभावो विप्रकारः, परा-पर्य्यभितो भवे ॥४४१॥

अत्याकारो निकारश्च, विप्रलब्धस्तु वञ्चिते ।
स्वप्नक् शयालुर्निद्रालुर्घूर्णित प्रचलायित ॥४४२॥

निद्राणे शयिते सुप्ता, जागरूकस्तु जागरी ।
जागर्य्या स्याज्जागरणं, जागरो जागरोऽपि च ॥४४३॥

विष्वगञ्चति विष्वद्र्यङ्, देवद्र्यङ् देवमञ्चति ।
सहाञ्चति तु सध्र्यङ् स्यात्तिर्यङ् पुनस्तिरोऽञ्चति ॥४४४॥

संशयालुः संशयिता, गृहयालुर्गृहीतरि ।
पतयालुः पातुकः स्यात्, समौ रोचिष्णुरोचनौ ॥४४५॥

दक्षिणार्हस्तु दक्षिण्यो, दक्षिणीयोऽथ दण्डितः ।
दापितः साधितोऽर्च्यस्तु, प्रतीक्ष्यः पूजितोऽर्हितः ॥४४६॥

नमस्यितो नमसितोऽपचितोऽर्ञ्चितोऽर्चितः ।
पूजाऽर्हणा सपर्याऽर्चा, उपहारबली समौ ॥४४७॥

विक्लवो विह्वलः स्थूलः, पीवा पीनश्च पीवरः ।
चक्षुष्यः सुभगो द्वेष्योऽक्षिगतोऽथांसलो बली ॥४४८॥

निर्दिग्धो मांसलश्चोपचितोऽथ दुर्बलः कृशः ।
क्षामः क्षीणस्तनुश्छातस्तलिनामांसिपेलवाः ॥४४९॥

पिचण्डिलो बृहत्कुक्षिस्तुन्दितुन्दिकतुन्दिलाः ।
उदर्युदरिले विग्नविखुविग्रा अनासिके ॥४५०॥

नतनासिकेऽवनाटोऽवटीटोऽवभ्रटोऽपि च ।
खरणास्तु खरणसो, नःक्षुद्रः क्षुद्रनासिकः ॥४५१॥

खुरणो स्यात्खुरणसो, उन्नसस्तूग्रनासिक ।
पङ्गुः श्रोणः खलतिस्तु, खल्वाटे ऐन्द्रलुप्तिके ॥४५२॥

शिपिविष्टो बभ्रुरथ, काणः कनन एकदृग् ।
पृश्निरल्पतनौ[2] कुब्जे, गडुले कुकरे कुणि[2] ॥४५३॥

निखर्वे खट्टने खर्वे, खर्वशाखश्च वामने ।
अकर्ण एडो बधिरो[3], दुश्चर्मा तु द्विनग्नके ॥४५४॥

षण्ढश्च शिपिविष्टश्च, खोटखोरौ[2] तु खञ्जके ।
विकलाङ्गस्तु पोगण्डे, ऊर्ध्वज्ञुरूर्ध्वजानुके ॥४५५॥

ऊर्ध्वज्ञश्चाप्यथ प्रज्ञप्रज्ञौ[2] विरलजानुके ।
सञ्ज्ञसज्ञौ[2] युतजानौ, वलिनो वलिभो समौ ॥४५६॥

उदग्रदन् दन्तुरे स्यात्, प्रलम्बाण्डस्तु मुष्करे ।
अन्धो गताक्षे उत्पश्ये, उन्मुखोऽधोमुखस्त्ववाङ् ॥४५७॥

मुण्डस्तु मुण्डित केशी, केशवे केशिकोऽपि च ।
वलिरे केकरो[2] वृद्धनाभौ तुण्डिलतुण्डिभौ[3] ॥४५८॥

आमयाव्यपटुर्ग्लानो[2], ग्लास्नुर्विकृत आतुरे ।
व्याधितोऽभ्यमितोऽभ्यान्तो, दद्रुरोगी तु दद्रुण ॥४५९॥

पामनः कच्छुरस्तुल्यौ सातिसारोऽतिसारकी ।
वातकी वातरोगी स्यात्, श्लेष्मलः श्लेष्मणः कफी ॥४६०॥
क्लिन्ननेत्रे चिल्लचुल्लौ, पिल्लोऽप्यार्शोयुगर्शसः ।
मूर्च्छिते मूर्त्तमूर्च्छालौ, सिध्मलस्तु किलासिनिः ॥४६१॥
पित्तं मायुः कफः श्लेष्मा, बलाशः स्नेहभूः खटः ।
रोगो रुजा रुगातङ्को, मान्द्यं व्याधिरपाटवम् ॥४६२॥
आम आमय आकल्यमुपतापो गदः समाः ।
क्षयः शोषो राजयक्ष्मा, यक्ष्मोऽथ क्षुते क्षुतं क्षवः ॥४६३॥
कासस्तु क्षवथुः पामा, खसः कच्छूर्विचर्चिका ।
कण्डूः कण्डूयनं खर्जूः, कण्डूयाऽथ क्षतं व्रणः ॥४६४॥
अरुरीर्म्म क्षणानुश्च, रूढव्रणपदं किणः ।
श्लीपदं पादवल्मीकः, पादस्फोटो विपादिका ॥४६५॥
स्फोटकः पिटको गण्डः, पृष्ठग्रन्थिः पुनर्गडुः ।
श्वित्रं स्यात् पाण्डुरं कुष्ठं, केशघ्नं त्विन्द्रलुप्तकम् ॥४६६॥
सिध्म किलासं त्वक्पुष्पं, सिध्मं कोठस्तु मण्डलम् ।
गलगण्डो गण्डमालो, रोहिणी तु गलाङ्कुरः ॥४६७॥

हिक्का हेक्का च हृल्लासः, प्रतिश्यायस्तु पीनसः ।
शोथस्तु श्वयथुः शोफो, दुर्नामार्शो गुदाङ्कुरः ॥४६८॥

छर्दिः प्रच्छर्दिका छर्दिर्वमथुर्वमनं वमिः ।
गुल्मः स्यादुदरग्रन्थिरुदावर्तो गुदग्रहः ॥४६९॥

गतिर्नाडी व्रणे वृद्धिः, कुरण्डश्चाण्डवर्धनम् ।
अश्मरी स्यान्मूत्रकृच्छ्रं, प्रमेहो बहुमूत्रता ॥४७०॥

अनाहस्तु विबन्धः स्याद्, ग्रहणीरुक् प्रवाहिका ।
व्याधिप्रभेदा विद्रधिभगन्दरज्वरादयः ॥४७१॥

दोषज्ञस्तु भिषग् वैद्य, आयुर्वेदी चिकित्सकः ।
रोगहार्यगदङ्कारो, भेषजं तन्त्रमौषधम् ॥४७२॥

भैषज्यमगदो जायुश्चिकित्सा रुक्प्रतिक्रिया ।
उपचर्योपचारौ च, लङ्घनं त्वपतर्पणम् ॥४७३॥

जाङ्गुलिको विषभिषक्, स्वास्थ्यं वार्तमनामयम् ।
सह्यारोग्ये पटूल्लाघवार्त्तकल्यास्तु नीरुजि ॥४७४॥

कुसृत्या विभवान्वेषी, पार्श्विकः सन्धिजीवकः ।
सत्कृत्यालङ्कृतां कन्यां, यो ददाति स कूकुदः ॥४७५॥

चपलश्चिकुरो नीलीरागस्तु स्थिरसौहृदः ।
ततो हरिद्रारागोऽन्यः, सान्द्रस्निग्धस्तु मेदुरः ॥४७६॥

गेहेनर्दी गेहेशूरः, पिण्डीशूरोऽस्तिमान् धनी ।
स्वस्थानस्थः परद्वेषी, गोष्ठश्वोऽथापदि स्थितः ॥४७७॥

आपन्नोऽथापद्विपत्तिर्विपत्, स्निग्धस्तु वत्सलः ।
उपाध्यभ्यागारिकौ तु, कुटुम्बव्यापृते नरि ॥४७८॥

जैवातृकस्तु दीर्घायुस्त्रासदायी तु शङ्कुरः ।
अभिपन्नः शरणार्थी, कारणिकः परीक्षकः ॥४७९॥

समर्द्धुकस्तु वरदो, व्रातीनाः सङ्घजीविनः ।
सभ्याः सदस्याः पार्षद्याः, सभास्ताराः सभासदः ॥४८०॥

सामाजिकाः सभा संसत्, समाजः परिषत्सदः ।
पर्षत्समज्यागोष्ठ्यास्था, आस्थानं समितिर्घटा ॥४८१॥

सांवत्सरो ज्यौतिषिको, मौहूर्त्तिको निमित्तवित् ।
दैवज्ञगणकादेशिज्ञानिकार्त्तान्तिका अपि ॥४८२॥

विप्रश्निकेक्षणिकौ च, सैद्धान्तिकस्तु तान्त्रिकः ।
लेखकेऽक्षरपूर्वाः स्युश्चणजीवकचुञ्चवः ॥४८३॥

वार्णिको लिपिकरश्चाक्षरन्यासे लिपिर्लिबिः ।
मषिधानं मषिकूपी, मलिनाम्बु मषी मसी ॥४८४॥

कुलिकस्तु कुलश्रेष्ठी, सभिको द्यूतकारके ।
कितवो द्यूतकृद् धूर्त्तोऽक्षधूर्तश्चाक्षदेविनि ॥४८५॥

दुरोदरं कैतवं च, द्यूतमक्षवती पणः ।
पाशकः प्रासकोऽक्षश्च, देवनस्तत्पणो ग्लहः ॥४८६॥

अष्टापदं शारिफलं, शारः शारिश्च खेलनी ।
परिणायस्तु शारीणां, नयनं स्यात्समन्ततः ॥४८७॥

समाह्वयः प्राणिद्यूतं, व्यालग्राह्यहितुण्डिकः ।
स्यात् मनोजवसस्तातसतुल्यः शास्ता तु देशकः ॥४८८॥

सुकृती पुण्यवान् धन्यो, मित्रयुर्मित्रवत्सलः ।
क्षेमङ्करोऽरिष्टतातिः, शिवतातिः शिवङ्करः ॥४८९॥

श्रद्धालुरास्तिकः श्राद्धो, नास्तिकस्तद्विपर्यये ।
वैरङ्गिको विरागार्हो, वीतदम्भस्त्वकल्कनः ॥४९०॥

प्रणाय्योऽसम्मतोऽन्वेष्टानुपदव्यः सहः क्षमः ।
शक्तः प्रभूष्णुर्भूतात्तस्त्वाविष्टे शिथिले श्लथः ॥४९१॥

संवाहकोऽङ्गमर्दः स्यान्नष्टबीजस्तु निष्कलः ।
आसीन उपविष्टः स्यादूर्द्ध्वं ऊर्ध्वन्दमः स्थितः ॥४९२॥

अध्वनीनोऽध्वगोऽध्वन्यः, पान्थः पथिकदेशिकौ ।
प्रवासी तद्गणो हारिः, पाथेयं शम्बलं समे ॥४९३॥

जङ्घालोऽतिजवो जङ्घाकरिको जङ्घिको जवी ।
जवनस्त्वरिते वेगे, रयो रंहस्तरः स्यदः ॥४९४॥

जवो वाजः प्रसरश्च, मन्दगामी तु मन्थरः ।
कामङ्गाम्यनुकामीनोऽत्यन्तीनोऽत्यन्तगामिनि ॥४९५॥

सहायोऽभिचरोऽनोश्च जीवि-गामि-चरे-प्लवाः ।
सेवकोऽथ सेवा भक्तिः, परिचर्या प्रसादना ॥४९६॥

शुश्रूषाऽऽराधनोपास्तिवरिवस्यापरीष्टयः ।
उपचारः पदातिस्तु, पत्तिः पद्गः पदातिकः ॥४९७॥

पादातिकः पादचारी, पदाजिपदिकावपि ।
सरः पुरोऽग्रतोऽग्रेभ्यः, पुरस्तो गम-गामिगाः ॥४९८॥

प्रष्ठोऽथावेशिकागन्तू, प्राघूर्णोऽभ्यागतोऽतिथिः ।
प्राघूर्णकोऽथावेशिकमातिथ्यं चातिथेय्यपि ॥४९९॥

सूर्य्योढस्त्वे स सम्प्राप्तो, य सूर्य्येऽस्तङ्गतेऽतिथि ।
पादार्थं पाद्यमर्घार्थमर्घ्यं वार्घ्यय गौरवम् ॥५००॥
अभ्युत्थानं व्यथकस्तु, स्यान्मर्म्मस्पृगरुन्तुदः ।
ग्रामेयके तु ग्रामीणग्राम्यौ लोको जनं प्रजा ॥५०१॥
स्यादामुष्यायणोऽमुष्यपुत्रे प्रख्यातवप्तृके ।
कुल्य. कुलीनोऽभिजातं, कौलेयकमहाकुलौ ॥५०२॥
जात्यो गोत्रं तु सन्तानोऽन्ववायोऽभिजनं कुलम् ।
अन्वयो जननं वंश., स्त्री नारी वनिता वधू ॥५०३॥
वशा सीमन्तिनी वामा, वर्णिनी महिलाऽबला ।
योषा योषित् विशेषास्तु, कान्ता भीरुर्नितम्बिनी ॥५०४॥
प्रमदा सुन्दरी रामा, रमणी ललनाऽङ्गना ।
स्वगुणेनोपमानेन, मनोज्ञादिपदेन च ॥५०५॥
विशेषिताङ्गकर्म्मा स्त्री, यथा तरललोचना ।
अलसेक्षणा मृगाक्षी, मत्तेभगमनापि च ॥५०६॥

---

१ स्वगुणेन विशेषिताङ्गा तरललोचना । स्वगुणेन विशेषितकर्म्मा अलसेक्षणा । उपमानेन विशेषिताङ्गा मृगाक्षी । उपमानेन विशेषितकर्म्मा मत्तेभगमना । मनोज्ञपदेन विशेषिताङ्गा वामाक्षी । मनोज्ञपदेन विशेषितकर्म्मा सुस्मिता ।

वामाक्षी सुस्मिताऽस्याः स्वं, मानलीलास्मरादयः।
लीला विलासो विच्छित्तिर्विब्बोकः किलिकिञ्चितम् ॥१०७॥
मोट्टायितं कुट्टमितं, ललितं विहृतं तथा।
विभ्रमश्चेत्यलङ्काराः, स्त्रीणां स्वाभाविका दश ॥१०८॥
प्रागल्भ्यौदार्यमाधुर्य्यशोभाधीरत्वकान्तयः।
दीप्तिश्चायत्नजा भावहावहेलास्त्रयोऽङ्गजाः ॥१०९॥

---

०१ स्त्रीणां स्वाभाविका लीलाद्या दशालंकारास्तेषां लक्षणानि "प्रियस्यानुकृतिर्लीला श्लिष्टा वाग्वेषचेष्टितैः"। ०२ "विलासोऽङ्गे विशेषो यः प्रियाप्तावासनादिषु"। ०३ "मण्डनाद्यादरन्यासो विच्छित्ती रूपदर्पतः"। ०४ "विब्बोकोऽभिमतप्राप्तावपि गर्वादनादरः"। ०५ "हर्षाद्रुदितगीतादिव्यामिश्रं किलकिञ्चितम्"। ०६ "मोट्टायितं प्रियं स्मृत्वा, साङ्गभङ्गविजृम्भणम्"॥ अत्र मोटायितमित्येकटकारोऽपि पाठः। ०७ "दुखोपचारः सौख्येऽपि हर्षात्कुट्टमितं मतं"। ०८ "अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितं" (मसृणाङ्गन्यासः)। ०९ "व्यक्तव्याभाषणं व्याजाद्विहृतं दर्शितेङ्गितम्"। ०१० "चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः"।

०१ अङ्गजास्त्रयोऽलङ्काराः। तत्र भ्रूतारकादीनां बहुविकारो हावः। १ अङ्गस्याल्पो विकारो भावः २ अङ्गस्य प्रचुरो विकारो हेला ३, यदुक्तं भरतेन—"अलङ्काराश्च नाट्यज्ञैर्ज्ञेया भावरसाश्रयाः। यौवनेऽभ्यधिकाः स्त्रीणां, विकारा वक्त्रगात्रजाः॥१॥ इति। देहात्मकं

सा कोपना भामिनी स्यात्, छेका मत्ता च वाणिनी ।
कन्या कनी कुमारी च, गौरी तु नग्निकाऽरजाः ॥५१०॥
मध्यमा तु दृष्टरजास्तरुणी युवतिश्चरी ।
तलुनी दिक्करी वर्या, पतिंवरा स्वयंवरा ॥५११॥
सुवासिनी वधूटी स्याच्चिरिण्ट्यथ सधर्मिणी ।
पत्नी सहचरी पाणिगृहीती गृहिणी गृहाः ॥५१२॥
दाराः क्षेत्रं वधूर्भार्या, जनी जाया परिग्रहः ।
द्वितीयोढा कलत्रं च, पुरन्ध्री तु कुटुम्बिनी ॥५१३॥
प्रजावती भ्रातृजाया, सूनोः स्नुषा जनी वधूः ।
भ्रातृवर्गस्य या जायाः, यातरस्ताः परस्परम् ॥५१४॥
वीरपत्नी वीरभार्या, कुलस्त्री कुलपालिका ।
प्रेयसी दयिता कान्ता, प्राणेशा वल्लभा प्रिया ॥५१५॥
हृदयेशा प्राणसमा, प्रेष्ठा प्रणयिनी च सा ।
प्रेयस्याद्याः पुंसि पत्यौ, भर्त्ता सेक्ता पतिर्वरः ॥५१६॥
विवोढा रमणो भोक्ता, सेव्यो वनयिता धवः ।
जन्यास्तु तस्य सुहृदो, विवाहे पाणिपीडनम् ॥५१७॥

गर्भेश्वरं गरवाद्वाय म्मुरिपव । मातामग्रुत्पिपा दासो, दाय-
देना सर्वा क्षमा ॥१॥" इति च व एव कथयति ।

पाणिग्रहणमुद्वाहः, उपात् यामयमावपि ।
दारकर्म परिणयो, जामाता दुहितुः पतिः ॥५१८॥
उपपतिस्तु जारः स्याद्, भुजङ्गो गणिकापतिः ।
जम्पती दम्पती जायापती भार्यापती समाः ॥५१९॥
यौतकं युतयोर्देयं, सुदायो हरणं च तत् ।
कृताभिषेका महिषी, भोगिन्योऽन्या नृपस्त्रियः ॥५२०॥
सैरन्ध्री याऽन्यवेश्मस्था, स्वतन्त्रा शिल्पजीविनी ।
असिक्न्यन्तःपुरप्रेष्या, दूतीसञ्चारिके समे ॥५२१॥
प्राज्ञी प्रज्ञा प्रज्ञानन्त्यां, प्राज्ञा तु प्रज्ञयान्विता ।
स्यादाभीरी महाशूद्री, जातिपुंयोगयोः समे ॥५२२॥
पुंयुज्याचार्याचार्याणी, मातुलानी तु मातुली ।
उपाध्यायान्युपाध्यायी, क्षत्रियर्य्या च शूद्र्यपि ॥५२३॥
स्वत आचार्या शूद्रा च, क्षत्रिया क्षत्रियाण्यपि ।
उपाध्याय्युपाध्याया स्यादर्य्यार्य्याण्यौ पुनः समे ॥५२४॥
०१ दिधिषूस्तु पुनर्भूर्द्विरूढा स्याद्दिधिषूः पतिः ।
स तु द्विजोऽग्रेदिधिषुर्यस्य स्यात्सैव गेहिनी ॥५२५॥

---

०१ " ज्येष्ठायां यद्यनूढायां, कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया, पूर्वा तु दिधिषूर्मता " इति मतान्तरम् ।

ज्येष्ठेऽनूढे परिवेत्तानुजो दारपरिग्रही ।
तस्य ज्येष्ठ परिवित्तिर्जाया तु परिवेदिनी ॥५२६॥
वृषस्यन्ती कामुकी स्यादिच्छायुक्ता तु कामुकी ।
कृतसापत्निकोऽध्यूढोऽधिविन्नाऽथ पतिव्रता ॥५२७॥
एकपत्नी सुचरित्रा, साध्वी सैत्यसैनी त्वरी ।
पुंश्चली चर्षणी बन्धक्यविनीता च पांसुला ॥५२८॥
स्वैरिणी कुलटा याति, या प्रिय साभिसारिका ।
वयस्याऽलि सखी सध्रीच्यशिश्वी तु शिशु विना॥५२९॥
पतिवत्नी जीवत्पतिर्विश्वस्ता विधवा समे ।
निर्वीरा निष्पतिसुता, जीवत्तोका तु जीवसूः ॥५३०॥
नश्यत्प्रसूतिका निन्दुः, सश्मश्रुर्नरमालिनी ।
कात्यायनी त्वर्द्धवृद्धा, काषायवसनाऽधवा ॥५३१॥
श्रवणा भिक्षुकी मुण्डा, पोटा तु स्त्री नृलक्षणा ।
साधारणा स्त्री गणिका, वेश्या पण्य पणाङ्गना ॥५३२॥
भुजिष्या लञ्जिका रूपाजीवा वारवधू पुन ।
सा वारमुख्याथ चुन्दी कुट्टनी शम्भली समा ॥५३३॥
पोटा वोटा च चेटी च, दासी च कुटहारिका ।
नग्ना तु कोटवी वृद्धा, पलिक्न्यथ रजस्वला ॥५३४॥

समानोदर्य्य[३]सोदर्य्य[४]सगर्भ[५]सहजा[६] अपि ।
सोदरश्च[७] स तु ज्येष्ठः, स्यात् पित्र्यः पूर्वजो[३]ऽग्रजः ॥५५१॥

जघन्यजे[१] यविष्ठः[२] स्यात्, कनिष्ठो[३]ऽवरजो[४]ऽनुजः[५] ।
स यवीयान्[६] कनीयांश्च[७], पितृव्य[१]श्याल[२]मातुलाः[३] ॥५५२॥

पितुः पत्न्याश्च मातुश्च, भ्रातरो देवृ[२]देवरौ ।
देवा[३] चावरजे पत्युर्जामि[१]स्तु भगिनी[२] स्वसा[३] ॥५५३॥

ननान्दा[१] तु स्वसा पत्युर्ननन्दा[२] नन्दिनी[३]त्यपि ।
पत्न्यास्तु भगिनी ज्येष्ठा, ज्येष्ठश्वश्रूः[१] कुली[२] च सा ॥५५४॥

कनिष्ठा श्यालिका[१] हाली[२], यन्त्रणी[३] केलिकुञ्चिका[४] ।
केलि[१]र्द्रवः[२] परीहासः[३], क्रीडा[४] लीला[५] च नर्म[६] च ॥५५५॥

देवनं[७] कूर्दनं[८] खेला[९], ललनं[१०] वर्करो[११]ऽपि च ।
वप्ता[१] तु जनक[२]स्तातो[३], बीजी[४] जनयिता[५] पिता[६] ॥५५६॥

पितामह[१]स्तस्य पिता, तत्पिता प्रपितामहः[१] ।
मातुर्मातामही[१]त्येवं, माता[१]ऽम्बा[२] जननी[३] प्रसूः[४] ॥५५७॥

सवित्री[५] जनयित्री[६] च, क्ष्मिला[१] तु बहुप्रसूः ।
धात्री[१] तु स्यादुपमाता[२], वीरमाता तु वीरसूः[१] ॥५५८॥

श्वश्रूर्माता पतिपत्न्यो , श्वशुरस्तु तयो पिता ।
पितरस्तु पितुर्वंश्या, मातुर्मातामहो कुले ॥५५९॥
पितरौ मातापितरौ मातरपितरौ पिता च माता च ।
श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥५६०॥ (आर्या)
भ्राता च भगिनी चापि, भ्रातरावथ बान्धवे ।
स्वो ज्ञाति स्वजनो बन्धु , सगोत्रश्च निजे पुन ॥५६१॥
आत्मीये स्वे स्वकीयश्च, सपिण्डास्तु सनाभय ।
तृतीया प्रकृति पण्डे, पण्डे क्लीबो नपुंसकम् ॥५६२॥
इन्द्रियायतनमङ्गविग्रहौ, क्षेत्रगात्रतनुभूघनास्तनू ।
मूर्त्तिमत्करणकायमूर्त्तयो, बेरसंहननदेहसंचरा ॥५६३॥
घनो बन्ध पुरं पिण्डो, वपु पुद्गलवर्ष्मणी ।
कलेवरं शरीरोऽस्मिन्नजीवे कुणपं शवं ॥५६४॥
मृतकं रुण्डकबन्धौ, त्वपशीर्षे क्रियायुजि ।
वयांसि तु दशा प्रायौ, सामुद्रं देहलक्षणम् ॥५६५॥
एकदेशे प्रतीकोऽङ्गावयवावपघनो अपि ।
उत्तमाङ्गं शिरो मूर्धा, मौलिर्मुण्डं कमस्तकं ॥५६६॥

वराङ्गं करणत्राणं, शीर्षं मस्तकमित्यपि ।
तज्जाः केशास्तीर्थवाकाश्चिकुराः कुन्तलाः कचाः ॥५६७॥
वालाः स्युस्तत्पराः पाशो, रचनो भार उच्चयः ।
हस्तः पक्षः कलापश्च, केशभूयस्त्ववाचकाः ॥५६८॥

अलकस्तु कर्कारालः, खङ्गुरश्चूर्णकुन्तलः ।
स तु भाले भ्रमरकः, कुरुलो भ्रमरालकः ॥५६९॥

धम्मिल्लः संयताः केशाः, केशवेषे कवर्यथ ।
वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ॥५७०॥
केशेषु वर्त्म सीमन्तः, पलितं पाण्डुरः कचः ।
चूडा केशी केशपाशी, शिखा शिखण्डिका समाः ॥५७१॥

सा बालानां काकपक्षः, शिखण्डकशिखाण्डकौ ।
तुण्डमास्यं मुखं वक्त्रं, लपनं वदनानने ॥५७२॥
भाले गोध्यलिकालीकल्लाटानि श्रुतौ श्रवः ।
शब्दाधिष्ठानपैञ्जूषमहानादध्वनिग्रहाः ॥५७३॥

कर्णः श्रोत्रं श्रवणं च, वेष्टनं कर्णशष्कुली ।
पालिस्तु कर्णलतिका, शङ्खो भालश्रवोऽन्तरे ॥५७४॥

चक्षुरक्षीक्षणं नेत्रं, नयनं दृष्टिरम्बकम् ।
लोचनं दर्शनं दृक् च, तत्तारा तु कनीनिका ॥५७५॥

वामं तु नयनं सौम्यं, भानवीयं तु दक्षिणम् ।
असौम्येऽक्षिण्यनक्षि स्यादीक्षणं तु निशामनम् ॥५७६॥
निभालनं निशमनं, निध्यानमवलोकनम् ।
दर्शनं द्योतनं निर्वर्णनं चाथार्द्धवीक्षणम् ॥५७७॥

अपाङ्गदर्शनं काक्षः, कटाक्षोऽक्षिविकूणितम् ।
स्यादुन्मीलनमुन्मेषो, निमेषस्तु निमीलनम् ॥५७८॥
अक्ष्णोर्बाह्यान्तावपाङ्गौ भ्रूरूर्द्ध्वे रोमपद्धति ।
सकोपभ्रूविकारे स्यात्, भ्र-भ्रु-भ्रू-भृ-परा कुटि ॥५७९॥

कूर्चं कूर्पं भ्रुवोर्मध्ये, पक्ष्म स्यान्नेत्ररोमणि ।
गन्धज्ञा नासिका नासा, घ्राणं घोणा विकूणिका ॥५८०॥
नक्रः नर्कुटकं शिङ्घिन्योष्ठोऽधरो रदच्छदः ।
दन्तोष्ठं च तत्प्रान्तौ, सृक्वणी असिकं त्वधः ॥५८१॥

असिकाधस्तु चिबुकं, स्याद् गल्लः सृक्कणः परः ।
गल्लात्परः कपोलश्च, परो गण्डः कपोलतः ॥५८२॥
ततो हनुः श्मश्रु कूर्चमास्यलोम च मासुरी ।
दाढिका दंष्ट्रिका दाढा, दंष्ट्रा जम्भो द्विजो रदः ॥५८३॥

रदना दशना दन्ता, दंशाः खादनमल्लकाः ।
राजदन्तौ तु मध्यस्थावुपरिश्रेणिकौ क्वचित् ॥५८४॥

रसज्ञा रसना जिह्वा, लोला तालु तु काकुदम् ।
सुधास्रवा घण्टिका च, लम्बिका गलशुण्डिका ॥५८५॥

कन्धरा धमनिर्ग्रीवा, शिरोधिश्च शिरोधरा ।
सा त्रिरेखा कम्बुग्रीवोऽवटुर्घाटा कृकाटिका ॥५८६॥

कृकस्तु कन्धरामध्यं, कृकपार्श्वे तु वीतनौ ।
ग्रीवाधमन्यौ प्राग् नीले, पश्चान्मन्ये कलम्बिके ॥५८७॥

गलो निगरणः कण्ठः, काकलकस्तु तन्मणिः ।
अंसो भुजशिरः स्कन्धो, जत्रुसन्धिरुरोऽसगः ॥५८८॥

भुजो बाहुः प्रवेष्टो दोर्बाहाऽथ भुजकोटरः ।
दोर्मूलं खण्डिकः कक्षा, पार्श्वं स्यादेतयोरधः ॥५८९॥

कफोणिस्तु भुजामध्यं, कफणिः कूर्परश्च सः ।
अधस्तस्या मणिबन्धात्, स्यात् प्रकोष्ठः कलाचिका ॥५९०॥

प्रगण्डः कूर्परांसान्तः पञ्चशाखः शयः शमः ।
हस्तः पाणिः करोऽस्यादौ, मणिबन्धो मणिश्च सः ॥५९१॥

करभोऽस्मादाकनिष्ठं, करशाखाङ्गुली समे ।
अङ्गुरी चाङ्गुलोऽङ्गुष्ठस्तर्जनी तु प्रदेशिनी ॥५९२॥

ज्येष्ठा तु मध्यमा मध्या, सावित्री स्यादनामिका
कनीनिका तु कनिष्ठाऽथ हस्तो हस्तपृष्ठतः ॥५९३॥
कामाङ्कुशो महाराजः, करजो नखरो नखः ।
करशूको भुजाकण्टः, पुनर्भवपुनर्नवौ ॥५९४॥
प्रदेशिन्यादिभिः सार्द्धमङ्गुष्ठे वितते मतिः ।
प्रादेशतालगोकर्णवितस्तयो यथाक्रमम् ॥५९५॥
प्रसारिताङ्गुलौ पाणौ, चपेटः प्रतलस्तलः ।
प्रहस्तस्तालिका तालः, सिंहतालस्तु तौ युतौ ॥५९६॥
सम्पिण्डिताङ्गुलिः पाणिर्मुष्टिर्मुस्तुर्मुचुट्यपि ।
सङ्ग्राहश्चार्द्धमुष्टिस्तु, खटकः कुञ्चितः पुनः ॥५९७॥
पाणिः प्रसृतः प्रसृतिस्तौ युतौ पुनरञ्जलिः ।
प्रसृते तु द्रवाधारे, गण्डूषश्चुलुकश्चुलुः ॥५९८॥
हस्तः प्रामाणिको मध्ये, मध्यमाङ्गुलिकूर्परम् ।
बद्धमुष्टिरसौ रत्निररत्निर्निष्कनिष्ठिकः । ॥५९९॥
व्यामो व्यायामन्यग्रोधौ स्तिर्यग्बाहू प्रसारितौ ।
ऊर्ध्वीकृतभुजापाणिनरमाने तु पौरुषम् ॥६००॥

दृग्द्वयसमात्रास्तु, जान्वादेस्तत्तदुन्मिते ।
पीठकः पृष्ठवंशः स्यात्, पृष्ठं तु चरमं तनोः ॥६०१॥

पूर्वभाग उपस्थोऽङ्कः, क्रोड उत्सङ्ग इत्यपि ।
क्रोडोरो हृदयस्थानं, वक्षो वत्सो भुजान्तरम् ॥६०२॥

स्तनान्तरं हृद् हृदयं, स्तनौ कुचौ पयोधरौ ।
उरोजौ च चूचुकन्तु, स्तनाद्वृन्त-शिखा-मुखाः ॥६०३॥

तुन्दं तुन्दिर्गर्भकुक्षी, पिचण्डो जठरोदरे ।
कालखण्डं कालखञ्जं, कालेयं कालकं यकृत् ॥६०४॥

दक्षिणे तिलकं क्लोम, वामे तु रक्तफेनजः ।
पुष्पसः स्यादथ प्लीहा, गुल्मोऽन्त्रं तु पुरीतति ॥६०५॥

रोमावली रोमलता, नाभिः स्यात्तुन्दकूपिका ।
नाभेरधो मूत्रपुटं, वस्तिर्मूत्राशयोऽपि च ॥६०६॥

मध्योऽवलग्नं विलग्नं, मध्यमोऽथ कटः कटिः ।
श्रोणिः कलत्रं कटीरं, काञ्चीपदं ककुद्मती ॥६०७॥

नितम्बारोहौ स्त्रीकट्याः, पश्चाज्जघनमग्रतः ।
त्रिकं वंशाधस्तत्पार्श्वकूपकौ तु कुकुन्दरे ॥६०८॥

पुंतौ स्फिजौ कटिप्रोथौ, वराङ्गं तु च्युतिर्भुलिः ।
भगोऽपत्यपथो योनिः, स्मरान्मन्दिरं कूपिके ॥६०९॥

स्त्रीचिह्नमथ पुंश्चिह्नं, मेढ्रं न शेपःशेपसी ।
शिश्नं मेढ्रं कामलता, लिङ्गं च द्वयमप्यद ॥६१०॥

गुह्यं प्रजननोपस्थौ, गुह्यमध्ये गुञ्जो मणिः ।
सीवनी तदधः सूत्रं, स्यादण्डं पेलमण्डकः ॥६११॥

मुष्कोऽण्डकोशो वृषणोऽपानं पायुर्गुदं च्युतिः ।
अधोमर्म शकृद्द्वारं, त्रिवलीकं वली अपि ॥६१२॥

विटपं तु महाबीज्यमन्तरा मुष्कवङ्क्षणम् ।
ऊरुसन्धिर्वङ्क्षणः स्यात्, सक्थ्यूरुस्तस्य पर्व तु ॥६१३॥

जानुर्नलकीलोऽष्ठीवान्, पश्चाद्भागोऽस्य मन्दिरं ।
कपोली त्वग्रिमो जङ्घा, प्रसृतो नलकिन्यपि ॥६१४॥

प्रतिजङ्घा त्वग्रजङ्घा, पिण्डिका तु पिचण्डिका ।
गुल्फस्तु चरणग्रन्थिर्घुटिको घुण्टको घुटः ॥६१५॥

---

०१ उक्तं सामुद्रिकशास्त्रे "कूर्मपृष्ठ १ गजस्कन्ध २ समरोमा-३ ऽल्पनासिका ४ । विस्तीर्णा ५ पद्मपत्राभा ६, षडेते सुभगा मता" । अल्पा नासिका–गुप्तमध्यं यस्य [illegible] अल्पनासिक ।

चरणः क्रमणः पादः, पदोऽङ्घ्रिश्चलनः क्रमः ।
पादमूलं गोहिरं स्यात्पार्ष्णिस्तु घुटयोरधः ॥६१६॥
पादाग्रं प्रपदं क्षिप्रं, त्वङ्गुष्ठाङ्गुलिमध्यतः ।
कूर्चं क्षिप्रस्योपर्यङ्घ्रिस्कन्धः कूर्चशिरः समे ॥६१७॥
तलहृदयं तु तलं, मध्ये पादतलस्य तत् ।
तिलकः कालकः पिप्लुर्जडुलस्तिलकालकः ॥६१८॥
रसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।
सप्तैव दश वैकेषां, रोमत्वक्स्नायुभिः सह ॥६१९॥
रसः आहारतेजोऽग्निसम्भवः षड्रसासवः ।
आत्रेयोऽसृक्करो धातुर्धन-मूल-महा-परः ॥६२०॥
रक्तं रुधिरमाग्नेयं, विस्रं तेजो-भवं रसात् ।
शोणितं लोहितमसृग्, वाशिष्ठं प्राणदासुरे ॥६२१॥
क्षतजं मांसकार्यस्रं, मांसं पललजङ्गले ।
रक्तात्तेजो-भवे क्रव्यं, काश्यपं तरसामिषे ॥६२२॥
मेदस्कृत् पिशितं कीनं, पलं पेश्यस्तु तल्लताः ।
बुक्को हृद् हृदयं वृक्कौ, सुरसं च तदग्रिमम् ॥६२३॥

शुष्के वल्लूरमुत्तप्तं, पूयं दुष्टे पुनः समे ।
मेदोऽस्थिकृत् वपा मांसात्तेजोजे गौतमं वसा ॥६२४॥
गोदं तु मस्तकस्नेहो, मस्तिष्को मस्तुलुङ्गकः ।
अस्थि कुल्यं मांसबीजं, मेदस्तेजश्च मज्जकृत् ॥६२५॥
मांसपित्तं श्वदयितं, कर्करो देहधारकम् ।
मेदोजं कीकसं सारं, करोटिः शिरसोऽस्थनि ॥६२६॥
कपालकर्परौ तुल्यौ, पृष्ठस्यास्थ्नि कशेरुका ।
शाखास्थनि स्यान्नलकं, पार्श्वास्थ्नि वङ्क्रिपर्शुके ॥६२७॥
शरीरास्थि करङ्कः स्यात्, कङ्कालमस्थिपञ्जरः ।
मज्जा तु कौशिकं शुक्रकरोऽस्थ्नः स्नेहसम्भवौ ॥६२८॥
शुक्रं रेतो बलं बीजं, वीर्यं मज्जसमुद्भवम् ।
आनन्दप्रभवं पुंस्त्वमिन्द्रियं किट्टवर्जितम् ॥६२९॥
पौरुषं प्रधानधातुर्लोम रोम तनूरुहम् ।
त्वक् छविश्छादनी कृत्तिश्चर्माजिनमसृग्धरा ॥६३०॥
वस्नसा तु स्नसा स्नायुर्नाड्यो धमन्यः सिराः ।
कण्डरा तु महास्नायुर्मलं किट्टं तदक्षिगम् ॥६३१॥

दूषीका दूषिका जैमं, कुलुकं पिप्पिका पुनः ।
दन्त्यं कार्णं तु पिञ्जूषः, शिङ्घाणो घ्राणसम्भवः ॥६३२॥

सृणीका स्यन्दिनी लालाऽऽस्यासवः कफकूचिका ।
मूत्रं वस्तिमलं मेहः, प्रस्रावो नृजलं स्रवः ॥६३३॥

पुष्पिका तु लिङ्गमलं, विड् विष्ठाऽवस्करः शकृत् ।
गूथं पुरीषं शमलोच्चारौ वर्चस्कवर्चसी ॥६३४॥

वेषो नेपथ्यमाकल्पः, परिकर्माङ्गसंस्क्रिया ।
उद्वर्त्तनमुत्सादनमङ्गरागो विलेपनम् ॥६३५॥

चर्चिक्यं समालभनं, चर्चा स्यान्मण्डनं पुनः ।
प्रसाधनं प्रतिकर्म, मार्ष्टिः स्यान्मार्जना मृजा ॥६३६॥

वासयोगस्तु चूर्णं स्यात्, पिष्टातः पटवासकः ।
गन्धमाल्यादिना यस्तु, संस्कारः सोऽधिवासनम् ॥६३७॥

निर्वेशा उपभोगोऽथ, स्नानं सवनमाप्लवः ।
कर्पूरागुरुकक्कोलकस्तूरीचन्दनद्रवैः ॥६३८॥

स्याद्यक्षकर्दमो मिश्रैर्वर्त्तिर्गात्रानुलेपनी ।
चन्दनागरुकस्तूरीकुङ्कुमैस्तु चतुःसमम् ॥६३९॥

अगुर्वगरुराजार्हं, लोहं कृमिजवंशिके ।
अनार्यजं जोङ्गकं च, मङ्गल्या मल्लिगन्धि यत् ॥६४०॥

कालागुरु काकतुण्डे, श्रीखण्डं रोहणद्रुमे ।
गन्धसारो मलयजश्चन्दनं हरिचन्दने ॥६४१॥

तैलपर्णिकगोशीर्षे, पत्राङ्ग रक्तचन्दनम् ।
कुचन्दनं ताम्रसारं, रञ्जनं तिलपर्णिका ॥६४२॥

जातिकोशं जातिफलं, कर्पूरो हिमवालुका ।
घनसारः सिताभ्रश्च, चन्द्रोऽथ मृगनाभिजा ॥६४३॥

मृगनाभिर्मृगमदः, कस्तूरी गन्धधूल्यपि ।
कश्मीरजन्म घुसृणं, वर्णं लोहितचन्दनम् ॥६४४॥

बाह्लीकं कुङ्कुमं वाह्लिशिखं कालेयजागुडे ।
सङ्कोचपिशुनं रक्तं, धीरं पीतनदीपनं ॥६४५॥

लवङ्गं देवकुसुमं, श्रीसञ्ज्ञमथ कोलकम् ।
कक्कोलकं कोशफलं, कालीयकं तु जापकम् ॥६४६॥

यक्षधूपो बहुरूपः, सालवेष्टोऽग्निवल्लभः ।
सर्जमणिः सर्जरसः, रालः सर्वरसोऽपि च ॥६४७॥

धूपो वृकात् कृत्रिमाच्च, तुरुष्कः सिह्लपिण्डकौ ।
पायसस्तु वृक्षधूपः, श्रीवासः सरलद्रवः ॥६४८॥

स्थानात् स्थानान्तरं गच्छन्, धूपो गन्धपिशाचिका ।
स्थासकस्तु हस्तबिम्बमलङ्कारस्तु भूषणम् ॥६४९॥

परिष्कारोऽऽभरणे च, चूडामणिः शिरोमणिः ।
नायकस्तरलो हारान्तर्मणिर्मुकुटं पुनः ॥६५०॥

मौलिः किरीटं कोटीरमुष्णीषं पुष्पदाम तु ।
मूर्ध्नि माल्यं मालो स्रक् च, गर्भकः केशमध्यगम् ॥६५१॥

प्रभ्रष्टकं शिखालम्बि, पुरोन्यस्तं ललामकम् ।
तिर्यक् वक्षसि वैकक्षं, प्रालम्बमृजुलम्बि यत् ॥६५२॥

सन्दर्भो रचना गुम्फः, श्रन्थनं ग्रन्थनं समाः ।
तिलके तमालपत्रचित्रपुण्ड्रविशेषकाः ॥६५३॥

आपीडशेखरोत्तंसावतंसाः शिरसः स्रजि ।
उत्तरौ कर्णपूरेऽपि, पत्रलेखा तु पत्रतः ॥६५४॥

भङ्गिवल्लिलताङ्गुल्यः, पत्रपाश्या ललाटिका ।
वालपाश्या पारितथ्या, कर्णिका कर्णभूषणम् ॥६५५॥

साटङ्कस्तु ताडपत्र, कुण्डल कर्णवेष्टक ।
उत्क्षिप्तिका तु कर्णान्दुर्बालिका कर्णपृष्ठगा ॥६५६॥
ग्रैवेयक कण्ठभूषा, लम्बमाना ललन्तिका ।
प्रालम्बिका कृता हेम्नोर सूत्रिका तु मौक्तिकै ॥६५७॥
हारो मुक्तात. प्रालम्बेलकू कलापावली लता ।
देवच्छन्दे शत साष्ट, त्विन्द्रच्छन्दे सहस्रकम् ॥६५८॥
तदर्द्धं विजयच्छन्दो, हारस्त्वेष्टोत्तर शतम् ।
अर्द्ध रश्मिकलापोऽस्य, द्वादश त्वर्द्धमाणवे ॥६५९॥
द्विर्द्वादशार्द्धगुच्छे स्यात्, पञ्च हारफल लता ।
अर्द्धहारश्चतु षष्टिर्गुच्छैमाणवमन्दरौ ॥६६०॥
अपि गोस्तनगोपुच्छौ ब्रद्धमर्द्ध यथोत्तरम् ।
इति हारा यष्टिभेदादेकावल्येकयष्टिका ॥६६१॥
कण्ठिकाऽप्यथ नक्षत्रमाला तत्सङ्ख्यमौक्तिकै ।
केयूरमङ्गद बाहुभूषाऽथ वरभूषणम् ॥६६२॥
कटको वलय पारिहार्य्यावापा च कङ्कणम् ।
हस्तसूत्र प्रतिसर, ऊर्म्मिका त्वङ्गुलीयकम् ॥६६३॥
सा साक्षराङ्गुलिर्मुद्रा, कटिसूत्र तु मेखला ।
कलापो रसना सारसन काञ्ची च सप्तकी ॥६६४॥

सा शृङ्खलं[1] पुंस्कटिस्था, किङ्किणी[1] क्षुद्रघण्टिका[2] ।
नूपुरं[1] तु तुलाकोटिः[2], पादतः कटका[3]ङ्गदे[4] ॥६६५॥

मञ्जीरं[5] हंसकं[6] शिञ्जिन्य[7]ंशुकं[1] वस्त्र[2]मम्बरम्[3] ।
सिचयो[4] वसनं[5] चीरा[6]च्छादौ[7] सिक्[8] चेल[9]वाससी[10] ॥६६६॥

पटः[11] प्रोतो[12]ऽञ्चलो[1]ऽस्यान्तो, वर्त्ति[1]र्वस्ति[2]श्च तद्दशाः ।
पत्रोर्णं[1] धौतकौशेय[3]मुष्णीषो[1] मूर्धवेष्टनम् ॥६६७॥

तत् स्यादुद्गमनीयं[1] यद्धौतयोर्वस्त्रयोर्युगम् ।
त्वक्फलकृमिरोमभ्यः, सम्भवात्तच्चतुर्विधम् ॥६६८॥

क्षौम[1]कार्प्पासि[2]कौशेय[3]राङ्कवा[4]दिविभेदतः ।
क्षौमं[1] दुकूलं[2] दुगूलं[3], स्यात्कार्पासं तु बादरम्[2] ॥६६९॥

कौशेयं[1] कृमिकोशोत्थं, राङ्कवं[1] मृगरोमजम् ।
कम्बलः[1] पुनरूर्णायु[2]राविकौ[3]रभ्रै[4]लकाः[5] ॥६७०॥

नवं वासोऽनाहतं[1] स्यात्तन्त्रकं[2] निष्प्रवाणि[3] च ।
प्रच्छादनं[1] प्रावरणं[2], संव्यानं[3] चोत्तरीयकम्[4] ॥६७१॥

वैकक्षे[1] प्रावारो[2]त्तरासङ्गौ[3] बृहतिका[4]पि च ।
वराशिः स्थूलशाटः[2] स्यात्, परिधानं[1] त्वधोंऽशुकम्[2] ॥६७२॥

अन्तरीयं निवसनमुपसंव्यानमित्यपि ।
तद्ग्रन्थिरुच्चयो नीवी, वरस्त्र्यर्द्धोरुकांशुकम् ॥६७३॥

चण्डातकं चलनकश्चलनी त्वितरस्त्रिया ।
चोलं कञ्चुलिका कूर्पासकोऽङ्गिका च कञ्चुके ॥६७४॥

शाटी चोरस्यर्थे नीशारो, हिमवातापहांशुके ।
कच्छो कच्छाटिका कक्षा, परिधानापराञ्चले ॥६७५॥

कच्छापटस्तु कौपीन, समौ नक्तककर्पटौ ।
निचोलः प्रच्छदपटो, निचुलश्चोत्तरच्छदः ॥६७६॥

उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते ।
वस्त्रमाल्यादि तत् पूर्णपात्रं पूर्णानकं च तत् ॥६७७॥

तत्स्यादाप्रपदीनं तु, व्याप्नोत्याप्रपदं हि यत् ।
चीवरं भिक्षुसङ्घाटी, जीर्णवस्त्रं पटच्चरम् ॥६७८॥

शाणी गोणी छिद्रवस्त्रे, जठार्द्धा छिन्नवाससि ।
पर्यस्तिका परिकर, पर्यङ्कश्चावसक्थिका ॥६७९॥

कुथे वर्णः परिस्तोम, प्रवेणी नवताऽऽस्तरा ।
अपटी काण्डपटः स्यात्, प्रतिसीरा जवन्यपि ॥६८०॥

तिरस्करिण्य[5]थोल्लोचो[1], वितानं[2] कदको[3]ऽपि च ।
चन्द्रोदये[4] स्थूलं[1] दूष्ये[2], केणिका[1] पटकुट्यपि[2] ॥६८१॥

गुणलयनिकायां[3] स्यात्, संस्तरस्रस्तरौ[2] समौ ।
तल्पं[1] शय्या[2] शयनीयं[3], शयनं[4] तलिमं[5] च तत् ॥६८२॥

मञ्च[1]मञ्चक[2]पर्य्यङ्क[3]पल्यङ्काः[4] खट्वया[5] समाः ।
उच्छीर्षक[1]मुपाधानं[2]बर्हो[3] पाले[1] पतद्ग्रहः[2] ॥६८३॥

प्रतिग्राहो[3] मुकुरा[1]त्मदर्शा[2]ऽऽदर्शास्तु[3] दर्पणे[4] ।
स्याद्वेत्रासन[1]मासन्दी[2], विष्टरः[1] पीठ[2]मासनम्[3] ॥६८४॥

कशिपु[1]र्भोजनाच्छादावौशीरं[1] शयनासने ।
लाक्षा[1] द्रुमामयो[2] राक्षा[3], रङ्गमाता[4] पलङ्कषा[5] ॥६८५॥

जतु[6] क्षतघ्नी[7] कृमिजा[8], यावा[1]लक्तौ[2] तु तद्रसः ।
अञ्जनं[1] कज्जलं[2] दीपः[1], प्रदीपः[2] कज्जलध्वजः[3] ॥६८६॥

स्नेहप्रियो[4] गृहमणि[5]र्दशाकर्षो[6] दशेन्धनः ।
व्यजनं[1] तालवृन्तं[2] तत्, धवित्रं[1] मृगचर्मणः ॥६८७॥

आलावर्त्तं[1] तु वस्त्रस्य, कङ्कतः[1] केशमार्जनः[2]
प्रसाधनश्चाथ[3] बालक्रीडनकं[1] गुडो[2] गिरिः[3] ॥६८८॥

गिरियको गिरिगुडे, समौ कन्दुकगेन्दुकौ ।
राजा राट् पृथिवीशक्रमध्यलोकेशभूभृतो ॥६८९॥
महीक्षित् पार्थिवो मूर्धाभिषिक्तो भू-प्रजा-नृ-प ।
मध्यमो मण्डलाधीशः, सम्राट् तु शास्ति यो नृपान् ६९०॥
य सर्वमण्डलस्येशो, राजसूय च योऽयजत् ।
चक्रवर्त्ती सार्वभौमस्ते तु द्वादश भारते ॥६९१॥
आर्षभिर्भरतस्तत्र, सगरस्तु सुमित्रभूः ।
मघवा वैजयिरथाश्वसेननृपनन्दनः ॥६९२॥
सनत्कुमारोऽथ शान्तिः, कुन्थुररो जिना अपि ।
सुभूमस्तु कार्त्तवीर्यः, पद्मः पद्मोत्तरात्मजः ॥६९३॥
हरिषेणो हरिसुतो, जयो विजयनन्दनः ।
ब्रह्मसूनुर्ब्रह्मदत्तः, सर्वेऽपीक्ष्वाकुवंशजाः ॥६९४॥
प्राजापत्यस्त्रिपृष्ठोऽथ, द्विपृष्ठो ब्रह्मसम्भवः ।
स्वयम्भू रुद्रतनयः, सोमभूः पुरुषोत्तमः ॥६९५॥
शैवः पुरुषसिंहोऽथ, महाशिरस्समुद्भवः ।
स्यात्पुरुषपुण्डरीकः, दत्तोऽग्निसिंहनन्दनः ॥६९६॥
नारायणो दाशरथिः, कृष्णस्तु वसुदेवभूः ।
वासुदेवा अमी कृष्णा, नव शुक्ला बलास्त्वमी ॥६९७॥

अचलो विजयो भद्रः, सुप्रभश्च सुदर्शनः ।
आनन्दो नन्दनः पद्मो, रामो विष्णुद्विपस्त्वमी ॥६९८॥

अश्वग्रीवस्तारकश्च, मेरको मधुरेव च ।
निशुम्भबलिप्रह्लादलङ्केशमगधेश्वराः ॥६९९॥

जिनैः सह त्रिषष्टिः स्युः, शलाकापुरुषा अमी ।
आदिराजः पृथुर्वैन्यो, मान्धाता युवनाश्वजः ॥७००॥

धुन्धुमारः कुवलाश्वो, हरिश्चन्द्रस्त्रिशङ्कुजः ।
पुरूरवा बौध ऐलः, उर्वशीरमणश्च सः ॥७०१॥

दौष्यन्तिर्भरतः सर्वदमः शकुन्तलात्मजः ।
हैहयस्तु कार्त्तवीर्यो, दोस्सहस्रभृदर्जुनः ॥७०२॥

कौशल्यानन्दनो दाशरथी रामोऽस्य तु प्रिया ।
वैदेही मैथिली सीता, जानकी धरणीसुता ॥७०३॥

रामपुत्रौ कुशलवावेकयोक्त्या कुशीलवौ ।
सौमित्रिर्लक्ष्मणो वाली, वालिरिन्द्रसुतश्च सः ॥७०४॥

आदित्यसूनुः सुग्रीवो, हनुमान् वज्रकण्टकः ।
मारुतिः केशरिसुतः, आञ्जनेयोऽर्जुनध्वजः ॥७०५॥

पौलस्त्यो[1] रावणो[2] रक्षो[3], लङ्केशो[4] दशकन्धरः[5] ।
रावणिः शक्रजिन्मेघनादो[3] मन्दोदरीसुतः ॥७०६॥

अजातशत्रुः शल्यारिर्धर्मपुत्रो[3] युधिष्ठिरः ।
कङ्कोऽजमीढो[6] भीमस्तु, मरुत्पुत्रो[1] वृकोदरः ॥७०७॥

किर्मीर-कीचक-बक-हिडिम्बानां निषूदनः ।
अर्जुनः फाल्गुनः पार्थः[6], सव्यसाची[7] धनञ्जयः ॥७०८॥

राधावेधी किरीट्यैन्द्रिर्जिष्णुः श्वेतहयो[10] नरः[11] ।
बृहन्नटो[12] गुडाकेशः[13], सुभद्रेशः[14] कपिध्वजः[15] ॥७०९॥

बीभत्सुः कर्णजित्तस्य, गाण्डीवं गाण्डिवं धनुः ।
पाञ्चाली[1] द्रौपदी[2] कृष्णा[3], सैरन्ध्री[4] नित्ययौवना[5] ॥७१०॥

वेदिजा याज्ञसेनी[7] च, कर्णश्चम्पाधिपोऽङ्गराट् ।
राधेयः सूतोऽर्कतनयः, कालपृष्ठं तु तद्धनुः ॥७११॥

श्रेणिकस्तु भम्भासारो[2], हाले स्यात् सातवाहनः ।
कुमारपालश्चौलुक्यो[2], राजर्षिः[3] परमार्हतः ॥७१२॥

मृतस्वमोक्ता धर्मात्मा, मारिव्यसनवारकः ।
राजबीजी[1] राजवंश्यो, बीज्यवंश्यौ तु वंशजे ॥७१३॥

स्वाम्यमात्यः सुहृत् कोशो, राष्ट्रदुर्गबलानि च ।
राज्याङ्गानि प्रकृतयः, पौराणां श्रेणयोऽपि च ॥७१४॥

तन्त्रं स्वराष्ट्रचिन्ता स्यादावापस्त्वरिचिन्तनम् ।
परिस्पन्दः परिकरः, परिवारः परिग्रहः ॥७१५॥

परिच्छदः परिबर्हस्तन्त्रोपकरणे अपि ।
राजशय्या महाशय्या, भद्रासनं नृपासनम् ॥७१६॥

सिंहासनं तु तद्धैमं, छत्रमातपवारणम् ।
चामरं वालव्यजनं, रोमगुच्छः प्रकीर्णकम् ॥७१७॥

स्थगी ताम्बूलकरङ्को, भृङ्गारः कनकालुका ।
भद्रकुम्भः पूर्णकुम्भः, पादपीठं पदासनम् ॥७१८॥

अमात्यः सचिवो मन्त्री, धीसखः सामवायिकः ।
नियोगी कर्म्मसचिवे, आयुक्तो व्यापृतश्च सः ॥७१९॥

द्रष्टा तु व्यवहाराणां, प्राड्विवाकोऽक्षदर्शकः ।
महामात्राः प्रधानानि, पुरोधास्तु पुरोहितः ॥७२०॥

सौवस्तिकोऽथ द्वारस्थः, क्षत्ता स्यात् द्वारपालकः ।
दौवारिकः प्रतीहारो, वेत्र्युत्सारकदण्डिनः ॥७२१॥

रक्षिवर्गोऽनीकस्थे स्यादध्यक्षाधिकृतौ समौ ।
पौरोगवे सूदाध्यक्षे, सूदस्त्वौदनिको गुणः ॥७२२॥

भक्तकारे सूपकारे, सूपारालिकवल्लवाः ।
भौरिके कनकाध्यक्षो, रूप्याध्यक्षस्तु नैष्किके ॥७२३॥

स्थानाध्यक्षः स्थानिकः स्यात्, शुल्काध्यक्षस्तु शौल्किकः ।
शुल्कस्तु घट्टादिदेय, धर्माध्यक्षस्तु धार्मिकः ॥७२४॥

धर्माधिकारिणी चाथ, हट्टाध्यक्षोऽधिकर्मिकः ।
चतुरङ्गबलाध्यक्षे, सेनानीर्दण्डनायकः ॥७२५॥

स्यायुकोऽधिकृतो ग्रामे, गोपा ग्रामेषु भूरिषु ।
स्यातामन्तःपुराध्यक्षेऽन्तर्वंशिकावरोधिकौ ॥७२६॥

शुद्धान्ते स्यादन्तःपुरमवरोधोऽवरोधनम् ।
सौविदल्लः कञ्चुकिनः, स्थापत्याः सौविदाश्च ते ॥७२७॥

षण्ढे वर्षवरः शत्रौ, प्रतिपक्षः परो रिपुः ।
शात्रवः प्रत्यवस्थाता, प्रत्यनीकोऽभियात्यरी ॥७२८॥

---

०१ महेश्वर " शुल्क घट्टादिदेये स्याज्जामातुर्बन्धकेऽपि च " बंधको विवाहाय यद् ग्राह्य धनमिति तट्टीका ।

दस्युः सपत्नोऽसहनो विपक्षो,
द्वेषी द्विषन् वैर्यहितो जिघांसुः ।
दुर्हृत् परः पन्थकपन्थिनौ द्विट्,
प्रत्यर्थ्यमित्रावभिमात्यरातौ ॥ ७२९ ॥

वैरं विरोधो विद्वेषो, वयस्यः सवयाः सुहृत् ।
स्निग्धः सहचरो मित्रं, सखा सख्यं तु सौहृदम् ॥७३०॥

सौहार्दं साप्तपदीनमैत्र्यजर्याणि सङ्गतम् ।
आनन्दनं त्वाप्रच्छनं, स्यात् समाजनमित्यपि ॥७३१॥

विषयानन्तरो राजा, शत्रुर्मित्रमतः परम् ।
उदासीनः परतरः, पार्ष्णिग्राहस्तु पृष्ठतः ॥ ७३२ ॥

अनुवृत्तिस्त्वनुरोधो, हेरिको गूढपूरुषः ।
प्रणिधिर्यथार्हवर्णोऽवसर्पो मन्त्रविच्चरः ॥ ७३३ ॥

वार्त्तायनः स्पशश्चार, आप्तप्रत्ययितौ समौ ।
सत्रिणि स्याद् गृहपतिर्दूतः सन्देशहारकः ॥ ७३४ ॥

सन्धिविग्रहयानान्यासनद्वैधाश्रया अपि ।
षड् गुणाः शक्तयस्तिस्र, प्रभुत्वोत्साहमन्त्रजाः ॥७२५॥

सामदानभेददण्डा, उपायाः साम सान्त्वनम् ।
उपजापः पुनर्भेदो, दण्डः स्यात् साहसं दमः ॥७२६॥

प्राभृतं ढौकनं लञ्चोत्कोचः कौशलिकामिषे ।
उपाचारः प्रदानं दोहारो ग्राह्यायनं अपि ॥ ७२७ ॥

मायोपेक्षेन्द्रजालानि, क्षुद्रोपाया इमे त्रयः ।
मृगयाऽक्षाः स्त्रियः पानं, वाक्पारुष्यार्थदूषणे ॥७२८॥

दण्डपारुष्यमित्येतद्धेयं व्यसनसप्तकम् ।
पौरुषं विक्रमः शौर्यं, शौण्डीर्यं च पराक्रमः ॥७२९॥

---

०१ माया कपटप्रकटनात्मिका, उपेक्षाऽवधीरणम्, इन्द्रजालं मन्त्रद्रव्यहस्तप्रयोगादिना असंभवद्वस्तुदर्शनम्, एषां द्वन्द्वः क्षुद्रा अल्पा उपायाः । ०२ अक्षाः-पाशका तैरुपलक्षितं द्यूतं ज्ञेयं, पानं मद्यादेः, वाक्पारुष्यं कर्कशवचनं, अर्थस्य दूषणं, तच्चतुर्धा-अदानं १ आदानं २ विनाशः ३ परित्यागश्च ४

यत्कोशदण्डजं तेजः, स प्रभावः प्रतापवत् ।
भिया धर्म्मार्थकामैश्च, परीक्षा या तु सोपधा ॥७४०॥

तन्मन्त्राद्यषडक्षीणं, यत्तृतीयाद्यगोचरः ।
रहस्यालोचनं मन्त्रो, रहश्छन्नमुपह्वरम् ॥७४१॥

विविक्तविजनैकान्तनिःशलाकानि केवलम् ।
गुह्यं रहस्यं न्यायस्तु, देशरूपं समञ्जसम् ॥७४२॥

कल्पाभ्रेषौ नयो न्याय्यं, तूचितं युक्तसांप्रते ।
लभ्यं प्राप्तं भजमानाभिनीतौपयिकानि च ॥७४३॥

प्रक्रिया त्वधिकारोऽथ, मर्य्यादा धारणा स्थितिः ।
संस्थाऽपराधस्तु मन्तुर्व्यलीकं विप्रियागसी ॥७४४॥

बलिः करो भागधेयो, द्विपाद्यो द्विगुणो दमः ।
वाहिनी पृतना सेना, बलं सैन्यमनीकिनी ॥७४५॥

---

०१ मंत्रः पञ्चाङ्गः यत्कौटिल्य आह—" कर्मणामारंभोपायः १ पुरुषद्रव्यसंपत् २ देशकालविभागः ३ विनिपातप्रतीकारः ४ कार्यसिद्धिश्चेति ५ पञ्चाङ्गानि "

कटकं ध्वजिनी तन्त्रं, दण्डोऽनीकं पताकिनी ।
वरूथिनी चमूश्चक्रं, स्कन्धावारोऽस्य तु स्थितिः ॥७४६॥
शिबिरं रचना तु स्यात्, व्यूहो दण्डादिको युधि ।
प्रत्यासारो व्यूहपार्ष्णिः, सैन्यपृष्ठे प्रतिग्रहः ॥७४७॥
एकेभैकरथा त्र्यश्वा, पत्तिः पञ्चपदातिका ।
सेना सेनामुखं गुल्मो, वाहिनी पृतना चमूः ॥७४८॥
अनीकिनी च पत्तेः स्यादिभाद्यैस्त्रिगुणैः क्रमात् ।
दशानीकिन्योऽक्षौहिणी, सज्जनं तूपरक्षणम् ॥७४९॥
वैजयन्ती पुनः केतुः, पताका केतनं ध्वजः ।
अस्योच्चूलावचूलौ स्यातामूर्ध्वाधोमुखकूर्चकौ ॥७५०॥
गजो वाजी रथः पत्तिः, सेनाङ्गं स्याच्चतुर्विधम् ।
युद्धार्थे चक्रवद्याने, शताङ्गः स्यन्दनो रथः ॥७५१॥

---

७४९ यदाहुः—" पत्ती १ सेणा २ सेणामुह ३ गुम्मा ४ वाहिणी चेव ५ । पियणा ६ चमू ७ अणीगिणि ८ दसणिगिदा अक्खोहिणी होइ ९ । तथा च—स्यात्सेनाऽक्षौहिणी नाम, खाब्धिषड्द्व्येकैर्गजैः २१८७० । रथै २१८७० रश्वैस्त्रिघ्नैः ६५६१०, पञ्चघ्नैश्च पदातिभिः १०९३५० ॥१॥" इति

स क्रीडार्थः पुष्परथो[1], देवार्थस्तु मरुद्रथः[2] ।

योग्यारथो[1] वैनयिको[2]ऽध्वरथः पारियानिकः[3] ॥७५२॥

कर्णीरथः[1] प्रवहणं[2], डयनं[3] रथगर्भकः[4] ।

अनस्तु[1] शकटो[2]ऽथ स्याद्गन्त्री[1] कम्बलिवाह्यकम्[2] ॥७५३॥

अथ काम्बलवास्त्राद्यास्तैस्तैः परिवृते रथे ।

स पाण्डुकम्बलीयः स्यात्, संवीतः पाण्डुकम्बलैः ॥७५४॥

स तु द्वैपो[1] वैयाघ्रश्च[2], यो वृतो द्वीपिचर्मणा ।

रथाङ्गं[1] रथपादो[2]ऽरि[3], चक्रं[4] धारा[1] पुनः प्रधिः[2] ॥७५५॥

नेमिः[3] अक्षाग्रकीले त्वण्याणी[1], नाभिस्तु पिण्डिका[2] ।

युगन्धरं[1] कूबरं[2] स्यात्, युगमीशान्तबन्धनम् ॥७५६॥

युगकीलकस्तु[1] शम्या[2], प्रासङ्गस्तु[1] युगान्तरम् ।

अनुकर्षो[1] दार्वधःस्थं, धूर्वी[1] यानमुखं[2] च धूः[3] ॥७५७॥

रथगुप्तिस्तु[1] वरूथो[2], रथाङ्गानि त्वपस्कराः[1] ।

शिबिका[1] याप्ययानेऽथ, दोला[1] प्रेङ्खोलिका[2] भवेत् ॥७५८॥

---

०१ दशगुणा अनीकिनी इत्यर्थः ।

वैनीतकं परम्परावाहनं शिबिकादिकम् ।
यान युग्य पत्र वाह्यं, वह्य वाहनधोरणे ॥७५९॥
नियन्ता प्राजिता यन्ता, सूतः सव्येष्ठसारथी ।
दक्षिणस्थप्रवेतारौ, क्षत्ता रथकुटुम्बिकः ॥७६०॥
रथारोहिणि तु रथी, रथिके रथिरो रथी ।
अश्वारोहे त्वश्ववारे, सादी च तुरगी च स ॥७६१॥
हस्त्यारोहे सादियन्तृमहामात्रनिषादिने ।
आधोरणो हस्तिपको, गजाजीवेभपालकाः ॥७६२॥
योद्धारस्तु भटो योधा, सेनारक्षास्तु सैनिका ।
सेनाया ये समवेतास्ते सैन्याः सैनिका अपि ॥७६३॥
ये सहस्रेण योद्धारस्ते साहस्राः सहस्रिणे ।
छायाकरे छत्रधारः, पताकी वैजयन्तिके ॥७६४॥
परिधिस्थे परिचरे, आमुक्ते प्रतिमुक्तवत् ।
अपिनद्धे पिनद्धेऽथ, सन्नद्धो व्यूढकङ्कटे ॥७६५॥
दंशितो वर्मितो सज्जो, सन्नाहो वर्म कङ्कटे ।
जगरे कवचं दंशस्तनुत्र माठ्युरश्छदे ॥७६६॥

निचोलकः[1] स्यात्कूर्पासो[2], वारबाणश्च[3] कञ्चुकः[4] ।
सारसनं[1] त्वधिकाङ्गं[2], हृदि धार्यं सकञ्चुकैः ॥७६७॥

शिरस्त्राणे[1] तु शीर्षण्यं[2], शिरस्कं[3] शीर्षकं[4] च तत् ।
नागोदमुदरत्राणं[2], जङ्घात्राणं[1] तु मत्कुणम् ॥७६८॥

बाहुत्राणं[1] बाहुलं[2] स्याज्जालिका[1] त्वङ्गरक्षणी[2] ।
जालप्रायायसी[3] स्यादायुधीयः[4] शस्त्रजीविनि[2] ॥७६९॥

काण्डपृष्ठायुधिकौ[3][4] च, तुल्यौ प्रासिककौन्तिकौ[1][2] ।
पारश्वधिकस्तु पारश्वधः परश्वधायुधः ॥७७०॥

स्युर्नैस्त्रिंशिकशाक्तीकयाष्टीकास्तत्तदायुधाः ।
तूणी[1] धनुर्भृत् धानुष्कः[3], स्यात्काण्डीरस्तु काण्डवान्[2] ॥

कृतहस्तः[1] कृतपुङ्खः[2], सुप्रयुक्तशरो हि यः ।
शीघ्रवेधी[1] लघुहस्तोऽपराद्धेषुस्तु लक्ष्यतः ॥७७२॥

च्युतेषुर्दूरवेधी[1] तु, दूरापात्यायुधं[1] पुनः ।
हेतिः[1] प्रहरणं[2] शस्त्रमस्त्रं[4] तच्च चतुर्विधम् ॥७७३॥

मुक्तं द्विधा पाणियन्त्रमुक्तं शक्तिशरादिकम् ।
अमुक्तं शक्तिकादि स्याद्यष्ट्याद्यं तु द्वयात्मकम् ॥७७४॥
धनुश्चापोऽस्त्रमिष्वासः, कोदण्डं धन्व कार्मुकम्
द्रुणाऽऽसौ लस्तकोऽस्यान्तरग्रं त्वर्त्तिरटन्यपि ॥७७५॥
मौर्वी जीवा गुणो गव्या, शिञ्जा बाणासनं द्रुणा ।
सिञ्जिनी ज्या च गोधा तु, तलं ज्याघातवारणम् ॥७७६॥
स्थानान्यालीढवैशाखप्रत्यालीढानि मण्डलम् ।
समपादं च वेध्यं तु, लक्ष्यं लक्षं शरव्यकम् ॥ ७७७ ॥

बाणे पृषत्कविशिखौ खगगार्द्धपक्षौ,
काण्डाशुगप्रदरसायकपत्रवाहाः ।
पत्री जिह्मगशिलीमुखकङ्कपत्र
रोपाः कलम्बशरमार्गणचित्रपुङ्खाः ॥७७८॥

प्रक्ष्वेडनः सर्वलौहो, नाराच एषणश्च सः ।
निरस्तः प्रहिते बाणे, विपाके दिग्धलिप्तकौ ॥७७९॥
बाणमुक्तिर्व्यवच्छेदो, दीप्तिर्वेगस्य तीव्रता ।
धुरप्रतद्वलार्द्धेन्दुतीरीमुख्यास्तु तद्भिदः ॥७८०॥

पक्षो वाजः पत्रणा तन्न्यासः पुङ्खस्तु कर्त्तरी ।
तूणो निषङ्गस्तूणीर, उपासङ्गः शराश्रयः ॥७८१॥

शरधिः कलापोऽप्यथ चन्द्रहासः,
करवालनिस्त्रिंशकृपाणखड्गाः ।
तरवारिकौक्षेयकमण्डलाग्रा,
असिरिष्टिरिष्टी त्सरुरस्य मुष्टिः ॥७८२॥

प्रत्याकारः परीवारः, कोशः खड्गपिधानकम् ।
अड्डनं फलकं चर्म, खेटकावरणस्फुराः ॥७८३॥

अस्य मुष्टिस्तु संग्राहः, क्षुरी छुरी कृपाणिका ।
शस्त्र्यसिधेनुपुत्र्यौ च, पत्रपालस्तु साऽऽयता ॥७८४॥

दण्डो यष्टिश्च लगुडः, स्यादीली करपालिका ।
भिन्दिपालः सृगः कुन्तः, प्रासोऽथ द्रुघणो घनः ॥७८५॥

मुद्गरः स्यात्कुठारस्तु, परशुः पर्शुपर्श्वधौ ।
परश्वधः स्वधितिश्च, परिघः परिघातनः ॥७८६॥

सर्वला तोमरः शल्यं, शङ्कुः शूले त्रिशीर्षकम् ।
शक्तिपट्टिशदुस्फोटचक्राद्याः शस्त्रजातयः ॥७८७॥

खुरली तु श्रमो योग्योऽभ्यासस्तद्भूः खलूरिका ।
सर्वाभिसारः सर्वौघः, सर्वसन्नहनं समाः ॥७८८॥

लोहाभिसारो दशम्यां, विधिर्नीराजनात्परः ।
प्रस्थानं गमनं व्रज्याऽभिनिर्याणं प्रयाणकम् ॥७८९॥

यात्राऽभिषेणनं तु यत् , सेनयाऽभिगमो रिपौ ।
स्यादु[illegible]मासारः , प्रचक्रं चलितं बलम् ॥७९०॥

प्रसारस्तु प्रसरणं, तृणकाष्ठादिहेतवे ।
अभिक्रमो रणे यानमभीतस्य रिपून् प्रति ॥७९१॥

अभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीणोऽभ्यरिं व्रजन् ।
स्यादुरस्वानुरसिल, ऊर्जस्वलोर्जस्वी समौ ॥७९२॥

सांयुगीनो रणे साधुर्जेता जिष्णुश्च जित्वरः ।
जय्यो यः शक्यते जेतुं, जेयो जेतव्यमात्रके ॥७९३॥

वैतालिका बोधकरा, अर्थिकाः सौखसुप्तिकाः ।
घाण्टिकाश्चाक्रिकाः सूतो, बन्दी मङ्गलपाठकः ॥७९४॥
मागधो मगधः संशप्तका युद्धानिवर्त्तिनः ।
नग्नः स्तुतिव्रतस्तस्य, ग्रन्थो भोगावली भवेत् ॥७९५॥
प्राणः स्थाम तरः पराक्रमबलद्युम्नानि शौर्यौजसी,
शुष्मं शुष्मं च शक्तिरूर्ज्जसहसी युद्धं तु सङ्ख्यं कलिः ।
सङ्ग्रामाहवसम्प्रहारसमराजन्यं युदायोधनं
संस्फोटः कलहो मृधं प्रहरणं संयद्रणो विग्रहः ॥७९६॥

द्वन्द्वं समाघातसमाह्वयानि,
सम्पातसंमर्दसमित्प्रघाताः ।
आस्कन्दनाऽऽजिप्रधनान्यनीक-
मभ्यागमश्च प्रविदारणं च ॥७९७॥

समुदायः समुदयो, राटिः समितिसङ्गरौ ।
अभ्यामर्दः सम्परायः, समीकं साम्परायिकम् ॥७९८॥
आक्रन्दः संयुगं चाथ, नियुद्धं तद्भुजोद्भवम् ।
पटहाडम्बरौ तुल्यौ, तुमुलं रणसङ्कुलम् ॥७९९॥

नासीरं त्वग्रयानं स्यादवमर्दस्तु पीडनम् ।
प्रपातस्त्वभ्यवस्कन्दो, धाट्यभ्यामादनं च सः ॥८००॥
तद्रात्रौ सौप्तिकं वीराशंसनं त्वाजिभीष्मभूः ।
नियुद्धभूरक्षवाटो, मोहो मूर्च्छा च कश्मलम् ॥८०१॥
वृत्ते भाविनि वा युद्धे, पानं स्याद्वीरपाणकम् ।
पलायनमपयानं, सन्द्रावोद्दावविद्रवाः ॥८०२॥
अपक्रमः समुत्प्रेम्यो, द्रावोऽथ विजयो जयः ।
पराजयो रणे भङ्गो, डमरं डिम्बविप्लवौ ॥८०३॥
वैरनिर्यातनं वैरशुद्धिर्वैरप्रतिक्रिया ।
बलात्कारस्तु प्रसभं, हठोऽथ स्खलितं छलम् ॥८०४॥

---

०१ " छल न स्खलिते व्याजे " इति महेश्वर । स्खलित परस्य वदत स्वाभिमतार्थान्तरविकल्पोपपादनेन वचनविघात । यथा कूपो नवोदक इति पक्षदर्शनम् । वादिना कूपो नवोदक इति कथाया नवीनार्थवाचकतया नवशब्दप्रयोगे कृते छलवादी नवसङ्ख्यामारोप्य दूषयति–कुत एक एव कूपो नवसङ्ख्योदक इति । मतिभ्रमादिकं वा, यच्चाणक्य –" किं करोति नर प्राज्ञ, शूरो वाऽथ सुपण्डित ? । दैवो यस्य च्छलान्वेषी, करोति विफला क्रिया. ॥ १ ॥ "

परा–पर्य–भितो भूतो, जितो भग्नः पराजितः ।
पलायितस्तु नष्टः स्याद्, गृहीतदिक् तिरोहितः ॥८०५॥

जिताहवो जितकाशी, प्रस्कन्नपतितौ समौ ।
चारः कारा गुप्तौ स्त्र्यां, ग्रहकः प्रोपतो ग्रहः ॥८०६॥

चातुर्वर्ण्यं द्विजक्षत्रवैश्यशूद्रा नृणां भिदः ।
ब्रह्मचारी गृही वानप्रस्थो भिक्षुरिति क्रमात् ॥८०७॥

चत्वार आश्रमास्तत्र, वर्णी स्याद्ब्रह्मचारिणि ।
ज्येष्ठाश्रमी गृहमेधी, गृहस्थः स्नातको गृही ॥८०८॥

वैखानसो वानप्रस्थो, भिक्षुः सान्यासिको यतिः ।
कर्म्मन्दी रक्तवसनः, परिव्राजकतापसौ ॥८०९॥

पाराशरी पारिकाङ्क्षी, मस्करी पारिरक्षकः ।
स्थाण्डिलः स्थण्डिलशायी, यः शेते स्थण्डिले व्रतात् ॥

तपःक्लेशसहो दान्तः, शान्तः श्रान्तो जितेन्द्रियः ।
अवदानं कर्म्म शुद्धं, ब्राह्मणस्तु त्रयीमुखः ॥८११॥

भूदेवो वाडवो विप्रो, द्व्यग्राभ्यां जाति-जन्म-भूः ।
वर्णज्येष्ठः सूत्रकण्ठः, षट्कर्मा मुखसम्भवः ॥८१२॥

वेदगर्भः शमीगर्भः, सावित्रो मैत्र एतशः ।
बटुः पुनर्माणवको, भिक्षा स्याद् ग्रासमात्रकम् ॥८१३॥

उपनायस्तूपनयो, बटूकरणमानयः ।
अग्नीन्धनं त्वग्निकार्यमाग्नीध्रा चाग्निकारिका ॥८१४॥

पालाशो दण्ड आषाढो, व्रते राम्भस्तु वैणवः ।
बैल्वः सारस्वतो रौच्यः, पैलवस्त्वौपरोधिकः ॥८१५॥

आश्वत्थस्तु मितेनमिरौदुम्बरे उलूखलः ।
जटी सटी वृषी पीठं, कुण्डिका तु कमण्डलुः ॥८१६॥

श्रोत्रियश्छान्दसो यष्टा, स्यादेष्टी स्यान्मखे मनी ।
याज्ञिको यजमानश्च, सोमयाजी तु दीक्षितः ॥८१७॥

इज्याशीलो यायजूको, यज्वा स्यात्सुत्वाभिषवः ।
सोमपः सोमपीथी स्यात्, स्थपतिर्गीष्पतीष्टिकृत् ॥८१८॥

---

०१ " ब्राह्मणानां भिक्षा स्यात् ग्रासमात्रमुदाहृतम् । अथ [illegible] ॥ १० "

सर्ववेदास्तु सर्वस्वदक्षिणं यज्ञमिष्टवान् ।
यजुर्विदध्वर्युर्ऋग्विद्धोतोद्गाता तु सामवित् ॥८१९॥

यज्ञो यागः सवः सत्रं, स्तोमो मन्युर्मखः क्रतुः ।
संस्तरः सप्ततन्तुश्च, वितानं बर्हिरध्वरः ॥८२०॥

अध्ययनं ब्रह्मयज्ञः, स्याद्देवयज्ञ आहुतिः ।
होमो होत्रं वषट्कारः, पितृयज्ञस्तु तर्पणम् ॥८२१॥

तच्छ्राद्धः पिण्डदानं च, नृयज्ञोऽतिथिपूजनम् ।
भूतयज्ञो बलिः पञ्च, महायज्ञा भवन्त्यमी ॥८२२॥

पौर्णमासश्च दर्शश्च, यज्ञौ पक्षान्तयोः पृथक् ।
सौमिकी दीक्षणीयेष्टिर्दीक्षा तु व्रतसंग्रहः ॥८२३॥

वृत्तिः सुगहना कुम्बा, वेदी भूमिः परिष्कृता ।
स्थण्डिलं चत्वरं चान्या, यूपः स्याद्यज्ञकीलकः ॥८२४॥

चषालो यूपकटको, यूपकर्णौ घृतावनौ ।
यूपाग्रभागे स्यात्तर्मोऽरणिर्निर्मन्थदारुणि ॥८२५॥

स्युर्दक्षिणाहवनीयगार्हपत्यास्त्रयोऽग्नयः ।
इदमग्नित्रयं त्रेता, प्रणीतः संस्कृतोऽनलः ॥८२६॥

ऋक् सामिधेनी धाय्या च, समिदाधीयते यया ।
समिदिन्धनमेधैधस्तर्पणैधांसि बर्हिस्तु ॥८२७॥

स्याद् भूतिर्भसितं रक्षा, स्रौवं पात्रं स्रुवादिकम् ।
स्रुवः स्रुगध्वरा सोपभृज्जुहूः पुनरुत्तरा ॥८२८॥

ध्रुवा तु सर्वसंज्ञार्था, यस्यामाज्यं निधीयते ।
योऽग्निमन्थ्य निहन्त्येनं, स स्यात्पशुरुपाकृतः ॥८२९॥

परम्पराकं शमनं (शसनं), प्रोक्षणं च मखे वधः ।
हिंसार्थं कर्माभिचारः, स्याद्यज्ञार्हं तु यज्ञियम् ॥८३०॥

हविः सान्नाय्यमामिक्षा, शृतोष्णक्षीरगा दधि ।
क्षीरशरः पयस्या च, तन्मस्तुनि तु वाजिनम् ॥८३१॥

हव्यं सुरेभ्यो दातव्यं, पितृभ्यः कव्यमोदनम् ।
आज्ये तु दधिसंयुक्ते, पृषदाज्यं पृषातकः ॥८३२॥

दध्ना तु मधुसंयुक्तं, मधुपर्कं महोदयः ।
हवित्री तु होमकुण्डं, हव्यपाकः पुनश्चरुः ॥८३३॥

अमृतं यज्ञशेषे स्याद्, विघसो भुक्तशेषके ।
यज्ञान्तोऽवभृथः पूर्त्तं, वाप्यादीष्टं मखक्रिया ॥८३४॥

इष्टापूर्तं तदुभयं, बर्हिर्मुष्टिस्तु विष्टरः ।
अग्निहोत्र्यग्निचिच्चाहिताग्निरथाग्निरक्षणम् ॥८३५॥
अग्न्याधानमग्निहोत्रं, दर्वी तु घृतलेखनी ।
होमाग्निस्तु महाज्वालो, महावीरः प्रवर्ग्यवत् ॥८३६॥
होमधूमस्तु निगणो, होमभस्म तु वैष्टुतम् ।
उपस्पर्शस्त्वाचमनं, घारसेकौ तु सेचने ॥८३७॥
ब्रह्मासनं ध्यानयोगासनेऽथ ब्रह्मवर्चसम् ।
वृत्ताध्ययनर्द्धिः पाठे, स्याद् ब्रह्माञ्जलिरञ्जलिः ॥८३८॥
पाठे तु मुखनिष्क्रान्ता, विप्रुषो ब्रह्मबिन्दवः ।
साकल्यवचनं पारायणं कल्पे विधिक्रमौ ॥८३९॥
मूलेऽङ्गुष्ठस्य स्याद्ब्राह्मं, तीर्थं कायं कनिष्ठयोः ।
पित्र्यं तर्जन्यङ्गुष्ठान्तर्दैवं त्वङ्गुलीमुखे ॥८४०॥
ब्रह्मत्वं तु ब्रह्मभूयं, ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं तद्वदथोपाकरणं श्रुतेः ॥८४१॥
संस्कारपूर्वं ग्रहणं, स्यात्स्वाध्यायः पुनर्जपः ।
औपवस्त्रं तूपवासः, कृच्छ्रं सान्तपनादिकम् ॥८४२॥

प्रायं सन्न्यास्यनशने, नियमः पुण्यकं व्रतम् ।
चरित्रं चरिताचारौ, चारित्रचरणे अपि ॥८४३॥
वृत्तं शीलं च मन्त्रोऽत्वसि जप्येऽघमर्षणम् ।
समास्तु पादग्रहणाभिवादनोपसङ्ग्रहाः ॥८४४॥
उपवीतं यज्ञसूत्रं, प्रोद्धृते दक्षिणे करे ।
प्राचीनावीतमन्यस्मिन्, निवीतं कण्ठलम्बितम् ॥८४५॥
प्राचेतसस्तु वाल्मीकिर्वल्मीकैकुशिनौ कविः ।
मत्रावरुणिवाल्मीकौ, वेदव्यासस्तु माठरः ॥८४६॥
द्वैपायनः पाराशर्यः, कानीनो बादरायणः ।
व्यासोऽस्याम्बा सत्यवती, वासवी गन्धकालिका ॥८४७॥
योजनगन्धा दाशेयी, शालङ्कायनजा च सा ।
जामदग्न्यस्तु रामः स्याद्, भार्गवो रेणुकासुतः ॥८४८॥
नारदस्तु देवब्रह्मा, पिशुनः कलिकारकः ।
वशिष्ठोऽरुन्धतीजानिरक्षमाला त्वरुन्धती ॥८४९॥
त्रिशङ्कुयाजी गाधेयो, विश्वामित्रश्च कौशिकः ।
कुशारणिस्तु दुर्वासाः, शतानन्दस्तु गौतमः ॥८५०॥

याज्ञवल्क्यो ब्रह्मरात्रिर्योगेशोऽप्यथ पाणिनौ ।
सालातुरीयदाक्षेयौ, गोनर्दीये पतञ्जलिः ॥८९१॥
कात्यायनो वररुचिर्मेधाजिच्च पुनर्वसुः ।
अथ व्याडिर्विन्ध्यवासी, नन्दिनीतनयश्च सः ॥८९२॥
स्फोटायनस्तु कक्षीवान्, पालकाप्ये करेणुभूः ।
वात्स्यायने मल्लनागः, कौटिल्यश्चणकात्मजः ॥८९३॥
द्रामिलः पक्षिलस्वामी, विष्णुगुप्तोऽङ्गुलश्च सः ।
क्षतव्रतोऽवकीर्णी स्याद्, व्रात्यः संस्कारवर्जितः ॥८९४॥
शिश्विदानः कृष्णकर्मा, ब्रह्मबन्धुर्द्विजोऽधमः ।
नष्टाग्निर्वीरहा जातिमात्रजीवी द्विजब्रुवः ॥८९५॥
धर्मध्वजी लिङ्गवृत्तिर्वेदहीनो निराकृतिः ।
वार्त्ताशी भोजनार्थं यो, गोत्रादि वदति स्वकम् ॥८९६॥
उच्छिष्टभोजनो देवनैवेद्यबलिभोजनः ।
अजपस्त्वसदध्येता, शाखारण्डोऽन्यशाखकः ॥८९७॥
शस्त्राजीवः काण्डस्पृष्टो, गुरुहा नरकीलकः ।
मलो देवादिपूजायामश्राद्धोऽथ मलिम्लुचः ॥८९८॥

पञ्चयज्ञपरिभ्रष्टो, निःपङ्क्तिरुचिः खरुः ।
सुप्ते यस्मिन्नुदेत्यर्कोऽस्तमेति च क्रमेण तौ ॥८५९॥
अभ्युदिताभिनिर्मुक्तौ, वीरोज्झो न जुहोति यः ।
अग्निहोत्रच्छलाद् याच्ञापरो वीरोपजीविकः ॥८६०॥
वीरविद्रावको जुह्वद्धनैः शूद्रसमाहृतैः ।
स्याद्वादवाद्यार्हतः स्याच्छून्यवादी तु सौगतः ॥८६१॥
नैयायिकस्त्वाक्षपादो, यौगः साङ्ख्यस्तु कापिलः ।
वैशेषिकः स्यादौलूक्यो, बार्हस्पत्यस्तु नास्तिकः ॥८६२॥
चार्वाको लौकायतिकश्चैते षडपि तार्किका ।
क्षत्र तु क्षत्रियो राजा, राजन्यो बाहुसम्भवः ॥८६३॥
अर्यो भूमिस्पृशो वैश्यो, ऊरव्यो ऊरुजो विशः ।
वाणिज्य पाशुपाल्य च, कर्षण चेति वृत्तय ॥८६४॥
आजीवो जीवन वार्त्ता, जीविका वृत्तिवेतन ।
उञ्छो धान्यकणादान, कणिशाद्यर्जनं शिलम् ॥८६५॥
ऋत तदुद्वयममृत कृषिर्मृत तु याचितम् ।
अयाचित स्यादमृत, सत्यावृत्ति श्वजीविका ॥८६६॥

सत्यानृतं तु वाणिज्यं, वणिज्या वाणिजो वणिक् ।
क्रयविक्रयिकः पण्याजीवोऽऽपणिको नैगमाः ॥८६७॥

वैदेहः सार्थवाहश्च, क्रायकः क्रयिकः क्रयी ।
क्रेयद तु विपूर्वास्ते, मूल्यं वस्नोर्घोवक्रयाः ॥८६८॥

मूलद्रव्यं परिपणो, नीवी लाभोऽधिकं फलम् ।
परिदानं विनिमयो, नैमेयः परिवर्त्तनम् ॥८६९॥

व्यतिहारः परावर्त्तो, वैमेयो निमयोऽपि च ।
निक्षेपोपनिधी न्यासः, प्रतिदानं तदर्पणम् ॥८७०॥

क्रेतव्यमात्रकं क्रेयं, क्रय्यं न्यस्तं क्रयाय यत् ।
पणितव्यं तु विक्रेयं, पण्यं सत्यापनं पुनः ॥८७१॥

सत्यङ्कारः सत्याकृतिस्तुल्यौ विपणविक्रयौ ।
गण्यं गणेयं सङ्ख्येयं, सङ्ख्या त्वेकादिका भवेत् ॥८७२॥

यथोत्तरं दशगुणं, भवेदेको दशामुतः ।
शतं सहस्रमयुतं, लक्षप्रयुतकोटयः ॥८७३॥

अर्बुदमब्जं[10] खर्वं[11] च, निखर्वं[12] च महाम्बुजम्[13] ।
शङ्कु[14]र्वार्धि[15]रन्त्यं[16] मध्यं[17], परार्धं[18] चेति नामतः ॥८७४॥
अस्फूंच द्वीपवार्ध्यादि, पुद्गलास्त्वाद्यनन्तरम् ।
सांयात्रिकः पोतवणिग्, यानपात्रं वहित्रकम् ॥८७५॥
बोहित्थं वहनं पोतः, पोतवाहो नियामकः ।
निर्यामः कर्णधारस्तु, नाविको नौस्तु मङ्गिनी ॥८७६॥
तरीतरण्यौ बेडोऽप, द्रोणी काष्ठाम्बुवाहिनी ।
नौकादण्डः क्षेपणी स्यात्, गुणवृक्षस्तु कूपकः ॥८७७॥
पोलिन्दास्त्वन्तरादण्डाः, स्यान्मङ्गो मङ्गिनीशिरः ।
अभ्रिस्तु काष्ठकुद्दालः, सेकपात्रं तु सेचनम् ॥८७८॥
केनिपातः कोटिपात्रमरित्रेऽथोडुपः प्लवः ।
कोलो भेलस्तरण्डश्च, स्यात्तीर्थमवतारः ॥८७९॥
गुण्यामीयो द्वैगुणिको, वार्धुषिकः कुसीदिकः ।
वार्धुष्यं कुसीदार्थप्रयोगो वृद्धिजीवने ॥८८०॥
वृद्धि कलान्तरंमृणं, उद्धारः पर्युदञ्चनम् ।
याच्ञयाऽऽप्तं याचितकं, परिवृत्त्यापमित्यकम् ॥८८१॥

अधमर्णो ग्राहकः स्यादुत्तमर्णस्तु दायकः ।
प्रतिभूर्लग्नकः साक्षी, स्थेयः आधिस्तु बन्धकः ॥८८२॥

तुलाद्यैः पौतवं मानं, द्रुवेयं कुडवादिभिः ।
पाय्यं हस्तादिभिस्तत्र, स्याद् गुञ्जाः पञ्च माषकः ॥८८३॥

ते तु षोडश कर्षोऽक्षः, पलं कर्षचतुष्टयम् ।
बिस्तः सुवर्णो हेम्नोऽक्षे, कुरुबिस्तस्तु तत्पले ॥८८४॥
तुला पलशतं तासां, विंशत्या भार आचितः ।
शाकटः शाकटीनश्च, शलाटस्ते दशाचितः ॥८८५॥

चतुर्भिः कुडवैः प्रस्थः, प्रस्थैश्चतुर्भिराढकः ।
चतुर्भिराढकैर्द्रोणः, खारी षोडशभिश्च तैः ॥८८६॥
चतुर्विंशत्याऽङ्गुलानां, हस्तो दण्डश्चतुष्करः ।
तत्सहस्रौ तु गव्यूतं, क्रोशस्तौ द्वौ तु गोरुतम् ॥८८७॥
गव्या गव्यूतगव्यूती, चतुष्क्रोशं तु योजनम् ।
पाशुपाल्यं जीववृत्तिर्गोमान् गोमी गवीश्वरः ॥८८८॥
गोपाले गोधुगाभीरगोपगोसङ्ख्यवल्लवाः ।
गोविन्दोऽधिकृतो गोषु, जाबालस्त्वजजीविकः ॥८८९॥

कुटुम्बी कर्षकः क्षेत्री, हली कृषिककार्षकौ ।
कृषीवलोऽपि जित्या तु, हलिः सीरस्तु लाङ्गलम् ॥८९०॥

गोदारणं हलमीषा, सीते तद्दण्डपद्धती ।
निरीषे कुटकं फाले, कृषके कुशिकं फलम् ॥८९१॥

दात्रं लवित्रं तन्मुष्टौ, वण्टो मत्यं समीकृतौ ।
गोदारणं तु कुद्दालः, खनित्रं त्ववदारणम् ॥८९२॥

प्रतोदस्तु प्रवयणं, प्राजनं तोत्रतोदने ।
योत्रं तु योक्त्रमाबन्धः, कोटिशो लोष्टभेदनः ॥८९३॥

मेधिर्मेथिः खलेवाली, खले गोबन्धदारु यत् ।
शूद्रोऽन्त्यवर्णो वृषलः, पद्यः पज्जो जघन्यजः ॥८९४॥

ते तु मूर्द्धावसिक्ताद्याः सङ्कीर्णमिश्रजातयः ।
क्षत्रियाया द्विजान्मूर्धावसिक्तो विट्स्त्रियां पुनः ॥८९५॥

अम्बष्ठोऽथ पारशवनिषादौ शूद्रयोषिति ।
क्षत्रान्माहिष्यो वैश्यायामुग्रस्तु वृषलस्त्रियाम् ॥८९६॥

वैश्यात्तु करणः शूद्रात्त्वायोगवो विशः स्त्रियाम् ।
क्षत्त्रियायां पुनः क्षत्ता, चण्डालो ब्राह्मणस्त्रियाम् ॥८९७॥

वैश्यात्तु मागधः क्षत्र्यां, वैदेहको द्विजस्त्रियाम् ।
सूतस्तु क्षत्त्रियाज्जात, इति द्वादश तद्भिदः ॥८९८॥

माहिष्येण तु जातः स्यात्, करण्यां रथकारकः ।
कारुस्तु कारी प्रकृतिः, शिल्पी श्रेणिस्तु तद्गणः ॥८९९॥

शिल्पं कला विज्ञानं च, मालाकारस्तु मालिकः ।
पुष्पाजीवः पुष्पलावी, पुष्पाणामवचायिनी ॥९००॥

कल्यपालः सुराजीवो, शौण्डिको मण्डहारकः ।
वारिवासः पानवणिक्, ध्वजो ध्वज्यासुतीवलः ॥९०१॥

मद्यं मदिष्टा मदिरा परिस्रुता
कश्यं परिस्रुन्मधु कापिशायनम् ।
गन्धोत्तमा कल्यमिरा परिप्लुता
कादम्बरी स्वादुरसा हलिप्रिया ॥९०२॥

शुण्डा हाला हारहूरं, प्रसन्ना वारुणी सुरा ।
माध्वीकं मदना देवसृष्टा कापिशमब्धिजा ॥९०३॥
मध्वासवे माधवको, मैरेये शीधुरासवः ।
जगलो मेदको मद्यपङ्के किण्वन्तु नग्नहूः ॥९०४॥
नग्नहूर्मद्यबीजं च, मद्यसन्धानमासुतिः ।
आसवोऽभिषवो मद्यमण्डकारोत्तमौ समौ ॥९०५॥
गल्वर्कस्तु चषकः स्यात्सरकश्चानुतर्षणम् ।
शुण्डा पानमदस्थानं, मधुवारा मधुक्रमाः ॥९०६॥
सपीतिः सहपानं स्यादापानं पानगोष्ठिका ।
उपदंशस्त्ववदंशश्चक्षणं मद्यपाशनम् ॥९०७॥
नाडिन्धमः स्वर्णकारः, कलादो मुष्टिकश्च सः ।
तैजसावर्त्तनी मूषा, भस्त्रा चर्मप्रसेविका ॥९०८॥
आस्फोटनी वेधनिका, शाणस्तु निकषः कषः ।
सन्दंशः स्यात्कङ्कमुखो, भ्रमः कुन्दं च यन्त्रकम् ॥९०९॥
वैकटिको मणिकारः, शौल्विकस्ताम्रकुट्टकः ।
शाङ्खिकः स्यात्काम्बविकस्तुन्नवायस्तु सौचिकः ॥९१०॥

कृपाणी कर्त्तरी कल्पन्यपि सूची तु सेवनी ।
सूचिसूत्रं पिप्पलकं, तर्कुः कर्त्तनसाधनम् ॥९११॥
पिञ्जनं विहननं च, तूलस्फोटनकार्मुकम् ।
सेवनं सीवनं स्यूतिस्तुल्यौ स्यूतप्रसेवकौ ॥९१२॥
तन्तुवायः कुविन्दः स्यात्, त्रसरः सूत्रवेष्टनम् ।
वाणिर्व्यूतिर्वानदण्डो, वेमा सूत्राणि तन्तवः ॥९१३॥
निर्णेजकस्तु रजकः, पादुकाकृत्तु चर्मकृत् ।
उपानत् पादुका पादूः, पन्नद्धा पादरक्षणम् ॥९१४॥
प्राणाहिताऽनुपदीना, त्वाबद्धाऽनुपदं हि या ।
नद्धी वर्ध्री वरत्रा स्यादारा चर्मप्रभेदिका ॥९१५॥
कुलालः स्यात्कुम्भकारो, दण्डभृच्चक्रजीवकः ।
शाणाजीवः शस्त्रमार्जो, भ्रमासक्तोऽसिधावकः ॥९१६॥
धूसरश्चाक्रिकस्तैली, स्यात्पिण्याकखलौ समौ ।
रथकृत् स्थपतिस्त्वष्टा, काष्ठतट् तक्षवर्द्धकी ॥९१७॥
ग्रामायत्तो ग्रामतक्षः, कौटतक्षोऽनधीनकः ।
वृक्षभित्तक्षणी वासी, क्रकचं करपत्रकम् ॥९१८॥

स उद्घनो यत्र काष्ठं काष्ठं निक्षिप्य तक्ष्यते ।
वृक्षादनो वृक्षभेदी, टङ्कः पाषाणदारकः ॥९१९॥
व्योकारः कर्मारो लोहकारः कूटं त्वयोघनः ।
व्रश्चनः पत्रपरशुरीषीका तूलिकैषिका ॥९२०॥
भक्ष्यकारः कान्दविकः, कन्दुस्वेदनिके समे ।
रङ्गाजीवस्तौलिकिकश्चित्रकृच्चाथ तूलिका ॥९२१॥
कूर्चिका चित्रमालेख्यं, पलगण्डस्तु लेप्यकृत् ।
पुस्तं लेप्यादिकर्म स्यान्नापितश्चण्डिलः क्षुरी ॥९२२॥
क्षुरमर्दी दिवाकीर्तिर्मुण्डकोऽन्तावसाय्यपि ।
मुण्डनं भद्राकरणं, वपनं परिवापणम् ॥९२३॥
क्षौरं नाराची स्वेपिण्यौ, देवाजीवस्तु देवलः ।
मार्दङ्गिको मौरजिको, वीणावादस्तु वैणिकः ॥९२४॥
वेणुध्मः स्याद्वैणविकः, पाणिघः पाणिवादकः ।
स्यात्प्रातिहारिको मायाकारो माया तु शाम्बरी ॥९२५॥
इन्द्रजालं तु कुहकं, जालं कुसृतिरित्यपि ।
कौतूहलं तु कुतुकं, कौतुकं च कुतूहलम् ॥९२६॥

व्याधो मृगवधाजीवी, लुब्धको मृगयुश्च सः ।
चापर्द्धिर्मृगयाऽऽखेटो, मृगव्याऽऽच्छोदने अपि ॥९२७॥

जालिकस्तु वागुरिको, वागुरा मृगजालिका ।
शुम्बं वराटको रज्जुः, शुल्वं तन्त्री वटी गुणः ॥९२८॥

धीवरो दाशकैवर्त्तौ, बडिशं मत्स्यवेधनम् ।
आनायस्तु मत्स्यजालं, कुवेणी मत्स्यबन्धनी ॥९२९॥

जीवान्तकः शाकुनिको, वैतंसिकस्तु सौनिकः ।
मांसिकः कौटिकश्चाथ, सूना स्थानं वधस्य यत् ॥९३०॥

स्याद्बन्धनोपकरणं, वीतंसो मृगपक्षिणाम् ।
पाशस्तु बन्धनग्रन्थिरवपातावटौ समौ ॥९३१॥

उन्माथः कूटयन्त्रं स्याद्विवर्णस्तु पृथग्जनः ।
इतरः प्राकृतो नीचः, पामरो बर्बरश्च सः ॥९३२॥

चण्डालोऽन्तावसाय्यन्तेवासिश्वपचबुक्कसाः ।
निषादप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः ॥९३३॥

पुलिन्दो नाहलो निष्ठ्यो, शबरो वरुटो भटः ।
मालो भिल्लः किराताश्च, सर्वेऽपि म्लेच्छजातयः ॥९३४॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधान-
चिन्तामणौ नाममालायां मर्त्यकाण्डस्तृतीयः
समाप्तः ॥ ३ ॥

---

## तिर्यक्काण्डः ।



भूर्भूमिः पृथिवी पृथ्वी, वसुधोर्वी वसुन्धरा ।
धात्री धरित्री धरणी, विश्वा विश्वम्भरा धरा ॥९३५॥
क्षितिः क्षोणी क्षमाऽनन्ता, ज्या कुर्वसुमती मही ।
गौर्गोत्रा भूतधात्री क्ष्मा, गन्धमाताऽचलाऽवनिः ॥९३६॥
सर्वंसहा रत्नगर्भा, जगती मेदिनी रसा ।
काश्यपी पर्वताधारा, स्थिरेला रत्न-बीज-सूः ॥९३७॥
विपुला सागराच्चाग्रे, स्युर्नेमीमेखलाम्बराः ।
द्यावापृथिव्यौ तु द्यावाभूमी द्यावाक्षमे अपि ॥९३८॥

दिवस्पृथिव्यौ तु रोदस्यौ रोदसी रोदसा च ते ॥
उर्वरा सर्वसस्या भूरिरिणं पुनरूषरम् ॥९३९॥
स्थलं स्थली मरुर्धन्वा, क्षेत्राद्यमप्रहतं खिलम् ।
मृन्मृत्तिका सा क्षारोषा, मृत्सा मृत्स्ना च सा शुभा ९४०
रुमा लवणखानिः स्यात्, सामुद्रं लवणं हि यत् ।
तदक्षीवं वशिरश्च, सैन्धवं तु नदीभवम् ॥९४१॥
माणिमन्थं शीतशिवं, रौमकं तु रुमाभवम् ।
वसुकं वस्तुकं तच्च, विडपाक्यं तु कृत्रिमं ॥९४२॥
सौवर्चलेऽक्षरुचकं, दुर्गन्धं शूलनाशनम् ।
कृष्णे तु तत्र तिलकं, यवक्षारो यवाग्रजः ॥९४३॥
यवनालजः पाक्यश्च, पाचनकस्तु टङ्कणः ।
मालतीतीरजो लोहश्लेषणो रसशोधनः ॥९४४॥
समास्तु स्वर्जिकाक्षारकापोतसुखवर्चकाः ।
स्वर्जिस्तु स्वर्जिका सुग्घ्ना, योगवाहा सुवर्चिका ॥९४५॥
भरतान्यैरावतानि, विदेहाश्च कुरून् विना ।
वर्षाणि कर्मभूम्यः स्युः, शेषाणि फलभूमयः ॥९४६॥

वर्षं वर्षधराद्यङ्कं, विषयस्तूपवर्त्तनम् ।
देशो जनपदो नीवृत्, राष्ट्रं निर्गश्च मण्डलम् ॥९४७॥
आर्यावर्त्तो जन्मभूमिर्जिनचक्र्यर्द्धचक्रिणाम् ।
पुण्यभूराचारवेदी, मध्यं विन्ध्यहिमागयोः ॥९४८॥
गङ्गायमुनयोर्मध्यमन्तर्वेदिः समस्थली ।
ब्रह्मावर्त्तः सरस्वत्या, दृषद्वत्याश्च मध्यतः ॥९४९॥
ब्रह्मवेदिः कुरुक्षेत्रे, पञ्चरामह्रदान्तरम् ।
धर्मक्षेत्रं कुरुक्षेत्रं, द्वादशयोजनावधि ॥९५०॥
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च, मध्यदेशः स मध्यमः ॥९५१॥
देशः प्राग्दक्षिणः प्राच्यो, नदीं यावच्छरावतीम् ।
पश्चिमोत्तरस्तूदीच्यः, प्रत्यन्तो म्लेच्छमण्डलम् ॥९५२॥
पाण्डूदक्कृष्णतो भूमेः, पाण्डूदक्कृष्णमृत्तिके ।
जङ्गलो निर्जलोऽनूपोऽम्बुमान् कच्छस्तु तद्विधः ॥९५३॥
कुमुद्वान् कुमुदावासो, वेतस्वान् भूरिवेतसः ।
नडप्रायो नडकीयो, नड्वांश्च नड्वलश्च सः ॥९५४॥

शाड्वलः (शाद्वलः) शादहरिते, देशो नद्यम्बुजीवनः ।
स्यान्नदीमातृको देवमातृको वृष्टिजीवनः ॥९५५॥
प्राग्ज्योतिषाः कामरूपा, मालवाः स्युरवन्तयः ।
त्रैपुरास्तु डाहलाः स्युश्चैद्यास्ते चेदयश्च ते ॥९५६॥
बङ्गास्तु हरिकेलीया, अङ्गाश्चम्पोपलक्षिताः ।
साल्वास्तु कारकुक्षीया, मरवस्तु दशेरकाः ॥९५७॥
जालन्धरास्त्रिगर्त्ताः स्युस्तायिकास्तर्जिकाभिधाः ।
कश्मीरास्तु माधुमताः, सारस्वता विकर्णिकाः ॥९५८॥
वाहिकाष्टक्कनामानो, वाह्लीका वाह्लिकाह्वयाः ।
तुरुष्कास्तु साखयः स्युः, कारुषास्तु बृहद्गृहाः ॥९५९॥
लम्पाकास्तु मुरण्डाः स्युः, सौवीरास्तु कुमालकाः ।
प्रत्यग्रथास्त्वहिच्छत्राः, कीकटा मगधाह्वयाः ॥९६०॥
ओण्ड्राः केरलपर्यायाः, कुन्तला उपहालकाः ।
ग्रामस्तु वसथः स-न्नि-प्रति-पर्युप तैः परः ॥९६१॥
पाटकस्तु तदर्द्धे स्यादाघाटस्तु घटोऽवधिः ।
अन्तोऽवसानं सीमा च, मर्यादापि च सीमनि ॥९६२॥

ग्रामसीमा तूपशल्यं, माल ग्रामान्तराटवी ।
पर्य्यन्तभू परिसरं, स्यात्कर्मान्तन्तु कर्म्मभू ॥९६३॥

गोस्थानं गोष्ठमेतत्तु गौष्ठीनं भूतपूर्वकम ।
तदाशितंगवीन स्याद्गावो यत्राशिता पुरा ॥९६४॥

क्षेत्रं तु वप्रं केदारं, सेतौ पाल्यौलिसंवरौ ।
क्षेत्रं तु शाकस्य शाकशाकटं शाकशाकिनमं ॥९६५॥

व्रैहेयं शालेयं षष्टिक्यं कौद्रवीणमौद्गीनं ।
व्रीह्यादीना क्षेत्रेऽणव्यं तु स्यादाणवीनमणो ॥९६६॥

भङ्ग्यं भाङ्गीनमौमीनमुम्यं, यव्यं यवक्यवत् ।
तिल्यं तैलीनं माषीणं, माष्यं भङ्गादिसम्भवम् ॥९६७॥

सीत्यं हल्यं त्रिहल्यं तु, त्रिसीत्यं त्रिगुणाकृतम् ।
तृतीयाकृतं द्विहल्यंचैव शम्बाकृतं च तत् ॥९६८॥

बीजाकृतं तूप्तकृष्टं, द्रौणिकोऽऽढकिकादयः ।
स्युर्द्रोणाढकवापादौ, खलधानं पुनः खलम् ॥९६९॥

चूर्णे क्षोदोऽथ रजसि, स्युर्धूलीपांशुरेणवः ।
लोष्टे लोष्टुर्दलिर्लेष्टुर्वल्मीकः कृमिपर्वतः ॥९७०॥
वम्रीकूटं वामलूरो, नाकुः शक्रशिरश्च सः ।
नगरी पूः पुरी द्रङ्गः, पत्तनं पुटभेदनम् ॥९७१॥
निवेशनमधिष्ठानं, स्थानीयं निगमोऽपि च ।
शाखापुरं तूपपुरं, खेटः पुरार्द्धविस्तरः ॥९७२॥
स्कन्धावारो राजधानी, कोट्टदुर्गे पुनः समे ।
गयापूर्गयराजर्षेः कन्यकुब्जं, महोदयम् ॥०७३॥
कन्याकुब्जं गाधिपुरं, कौशं कुशस्थलं च तत् ।
काशिर्वाराणसी वाराणसी शिवपुरी च सा ॥९७४॥
साकेतं कोशलोऽयोध्या, विदेही मिथिले समे ।
त्रिपुरी चेदिनगरी, कौशाम्बी वत्सपत्तनम् ॥९७५॥
उज्जयिनी स्याद्विशालाऽवन्ती पुष्पकरण्डिनी ।

---

०१ उत्कर्षेण जयत्युज्जयिनी, रम्यादित्वादनट्, अन्ये तु उज्जयिनी नाम राक्षसी देवता तस्या निवास उज्जयिनीति चातुरार्थकमणमुत्पाद्य तस्य लोपमिच्छन्ति ।

पाटलिपुत्रं कुसुमपुरं चम्पा तु मालिनी ॥९७६॥

लोमपादकर्णयोः पूः देवीकोटं उमावनम् ।
कोटीवर्षं बाणपुरं, स्याच्छोणितपुरं च तत् ॥९७७॥

मथुरा तु मधूपघ्नं, मधुराऽथ गजाह्वयम् ।
स्याद्धास्तिनपुरं हस्तिनीपुरं हस्तिनापुरम् ॥९७८॥

ताम्रलिप्तं दामलिप्तं, ताम्रलिप्ती तमालिनी ।
स्तम्बपूर्विष्णुगृहं च, स्याद्विदर्भा तु कुण्डिनम् ॥९७९॥

द्वारवती द्वारका स्यात्, निषधा तु नलस्य पूः ।
प्राकारो वरणः सालः, चयो वप्रोऽस्य पीठभूः ॥९८०॥

प्राकाराग्रं कपिशीर्षं, सौधोर्ध्वाट्टाट्टालकाः समाः ।
पूर्द्वारं गोपुरं रथ्याप्रतोलीविशिखाः समाः ॥९८१॥

परिकूटं हस्तिनखो, नगरद्वारकूटके ।
मुखं निःसरणं घाटे, प्राघाणोऽवटरो वृतिः ॥९८२॥

पदव्येकपदी पद्या, पद्धतिर्वर्त्म वर्तनी ।
अयनं सरणिर्मार्गोऽध्वा पन्था निगमः सृतिः ॥९८३॥

सत्पथे स्वतितः पन्थाः, अपन्था अपथं समे ।
व्यध्वो दुरध्वः कदध्वा, विपथं कापथं च सः ॥९८४॥

प्रान्तरं दूरशून्योऽध्वा, कान्तारो वर्त्म दुर्गमम् ।
सुरुङ्गा तु सन्धिला स्याद्गूढमार्गो भुवोऽन्तरे ॥९८५॥

चतुष्पथे तु संस्थानं, चतुष्कं त्रिपथे त्रिकम् ।
द्विपथं तु चारुपथो, गजाद्यध्वा त्वसङ्कुलः ॥९८६॥

घण्टापथः संसरणं, श्रीपथो राजवर्त्म च ।
उपनिष्क्रमणं चोपनिष्करं च महापथः ॥९८७॥

विपणिस्तु वणिग्मार्गः, स्थानं तु पदमास्पदम् ।
श्लेषस्त्रिमार्ग्याः शृङ्गाटं, बहुमार्गी तु चत्वरम् ॥९८८॥

श्मशानं करवीरं स्यात्, पितृ-प्रेताद्वनं गृहम् ।
गेहभूर्वास्तु गेहं तु, गृहं वेश्म निकेतनम् ॥९८९॥

मन्दिरं सदनं सद्म, निकाय्यो भवनं कुटं ।
आलयो निलयः शाला, सभादवसितं कुलम् ॥९९०॥

धिष्ण्यमावसथं स्थानं, पस्त्यं संस्त्याय आश्रयः ।
ओको निवास आवासो, वसतिः शरणं क्षयः ॥९९१॥

धामागारं निशान्तं च, कुट्टिमं त्वस्य बद्धभूः ।
चतुःशालं सञ्जवनं, सौधं तु नृपमन्दिरम् ॥९९२॥

उपकारिकोपकार्यौ, सिंहद्वारं प्रवेशनम् ।
प्रासादो देवभूपानां, हर्म्यं तु धनिनां गृहम् ॥९९३॥

मठावसथ्यावसथौ, स्युश्छात्रव्रतिवेश्मनि ।
पर्णशालोटजश्चैत्यविहारौ जिनसद्मनि ॥९९४॥

गर्भागारेऽपवरको, वासौकः शयनास्पदम् ।
भाण्डागारं तु कोशः स्यात्, चन्द्रशाला शिरोगृहम् ॥
कुप्यशाला तु सन्धानी, कायमानं तृणौकसि ।
होत्रीयन्तु हविर्गेहं, प्राग्वंशः प्राग् हविर्गृहात् ॥९९५॥

आथर्वणं शान्तिगृहमास्थानगृहमिन्द्रकम् ।
तैलिशाला यन्त्रगृहमरिष्टं सूतिकागृहम् ॥९९७॥

सूदशाला रसवती, पाकस्थानं महानसम् ।
हस्तिशाला तु चतुरं, वाजिशाला तु मन्दुरा ॥९९८॥

सन्दानिनी तु गोशाला, चित्रशाला तु जालिनी ।
कुम्भशाला पाकपुटी, तन्तुशाला तु गर्त्तिका ॥९९९॥

नापितशाला वपनी, शिल्पा खरकुटी च सा ।
आवेशनं शिल्पिशाला, सत्रशाला प्रतिश्रयः ॥१०००॥

आश्रमस्तु मुनिस्थानमुपघ्नस्त्वन्तिकाश्रयः ।
प्रपा पानीयशाला स्यात्, गञ्जा तु मदिरागृहम् ॥१००१॥

पक्कणः शबरावासो, घोषस्त्वाभीरपल्लिका ।
पण्यशाला निपद्याऽट्टो, हट्टो विपणिरापणः ॥१००२॥

वेश्याश्रयः पुरं वेशो, मण्डपस्तु जनाश्रयः ।
कुड्यं भित्तिस्तदेडूकमन्तर्निहितकीकसम् ॥१००३॥

वेदी वितर्दिरजिरं, प्राङ्गणं चत्वराङ्गणे ।
वलजं प्रतीहारो द्वाद्वारेऽथ परिघोऽर्गला ॥१००४॥
साऽल्पा स्वर्गलिका सूचिः, कुञ्चिकायान्तु कूचिका ।
साधारण्य कुर्चेश्चासौ, द्वारयन्त्रं तु तालकम् ॥१००५॥
अस्योद्घाटनयन्त्रन्तु, ताल्वपि प्रतितालयपि ।
तिर्यग्द्वारोर्ध्वदारूत्तरङ्गं स्यादररं पुनः ॥१००६॥
कपाटोऽररिः कुवाटं, पक्षद्वारं तु पक्षकः ।
प्रच्छन्नमन्तर्द्वारं स्याद्, बहिर्द्वारं तु तोरणम् ॥१००७॥
तोरणोर्ध्वे तु मङ्गल्य, दाम वन्दनमालिका ।
स्तम्भादेः स्यादधोदारौ, शिला नासोर्ध्वदारुणि ॥१००८॥
गोपानसी तु वलभीच्छादने वक्रदारुणि ।
गृहावग्रहणी देहल्युम्बरोदुम्बरोम्बुराः ॥१००९॥
प्रघाणः प्रघणोऽलिन्दो, बहिर्द्वारप्रकोष्ठकः ।
कपोतपाली विटङ्कं, पटलं छदिषी समे ॥१०१०॥
नीध्रं वलीकं तत्प्रान्त, इन्द्रकोशस्तमङ्गकः ।
वलभी छदिराधारो, नागदन्तास्तु दन्तकाः ॥१०११॥

मत्तालम्बोऽपाश्रयः स्यात्, प्रग्रीवो मत्तवारणे ।
वातायनो गवाक्षश्च, जालकेऽथान्नकोष्ठकः ॥१०१२॥

कुसूलोऽश्रिस्तु कोणोऽणिः, कोटिः पाल्यस्र इत्यपि ।
आरोहणं तु सोपानं, निःश्रेणिस्त्वधिरोहिणी ॥१०१३॥

स्थूणा स्तम्भः शालभञ्जी, पाञ्चालिका च पुत्रिका ।
काष्ठादिघटिता लेप्यमयी त्वञ्जलिकारिका ॥१०१४॥

नन्द्यावर्त्तप्रभृतयो, विच्छन्दा आढ्यवेश्मनाम् ।
समुद्गः सम्पुटः पेटा, स्यान्मञ्जूषाऽथ शोधनी १०१५

सम्मार्ज्जनी बहुकरी, वर्द्धनी च समूहनी ।
सङ्करावकरौ तुल्यावुदूखलमुलूखलम् ॥१०१६॥

प्रस्फोटनं तु पवनमवघातस्तु कण्डनम् ।
कटः किलिञ्जो मुसलोऽयोग्रं कण्डोलकः पिटम् १०१७

चालनी तितउः शूर्पं, प्रस्फोटनमथान्तिका ।
चुल्ल्यश्मन्तकमुद्धानं, स्यादधिश्रयणी च सा ॥१०१८॥

स्थाल्युखा पिठरं कुण्डं, चरुः कुम्भी घटः पुनः ।
कुटः कुम्भः करीरश्च, कलशः कलसो निपः ॥१०१९॥

हसन्यङ्गाराच्छकटी-धानी-पात्री हसन्तिका ।
भ्राष्ट्रोऽम्बरीषमृचीषमृजीषं पिष्टपाकभृत् ॥१०२०॥

कम्बिर्दर्वि खजाकोऽथ, स्यात्तर्दूर्दारुहस्तके ।
वार्द्धान्यां तु गलन्त्यालू, कर्करी करकोऽथ स १०२१

नालिकेरन काङ्कस्तुल्यौ कटाहकर्परौ ।
मणिकोऽलिञ्जरो गर्गरीकलश्यौ तु मन्थनी ॥१०२२॥

वैशाखे खर्जको मन्था, मन्थनो मन्थदण्डकः ।
मन्थं क्षुब्धोऽस्य विष्कम्भो, मञ्जीरं कुटरोऽपि च १०२३

शालाजीरो वर्द्धमाने, शरावे कोशिका पुन ।
मल्लिका चषके कंसे, पारी स्यात्पानभाजनम् ॥१०२४॥

कुतूश्चर्मस्नेहपात्रं, कुतुपस्तु तदल्पकम् ।
दृति खल्लश्चर्ममयी, त्वालु करकपात्रिका ॥१०२५॥

सर्वमावपन भाण्ड, पात्रामत्रे तु भाजनम् ।
तद्विशाल पुन स्थाल, स्यात्पिधानमुदञ्चनम् ॥१०२६॥

शैलोऽद्रि शिखरी शिलोच्चयगिरी गोत्रोऽचलः सानुमान्,
ग्रावा पर्वतभूध्रभूधरधराहार्या नगोऽथोदयः ।

पूर्वाद्रिश्चरमाद्रिरस्त उदगद्रिस्त्वद्रिराण् मेनका-
प्राणेशो हिमवान् हिमालयहिमप्रस्थौ भवानीगुरुः ॥१०२७
हिरण्यनाभो मैनाकः, सुनाभश्च तदात्मजः ।
रजताद्रिस्तु कैलासोऽष्टापदः स्फटिकाचलः ॥१०२८॥
क्रौञ्चः क्रुञ्चोऽथ मलय, आपाढो दक्षिणाचलः ।
स्यान्माल्यवान् प्रस्रवणो, विन्ध्यस्तु जलवालकः ॥१०२९
शत्रुञ्जयो विमलाद्रिरिन्द्रकीलस्तु मन्दरः ।
सुवेलः स्यात त्रिमुकुटस्त्रिकूटस्त्रिककुच्च सः ॥१०३०॥
उज्जयन्तो रैवतकः, सुदारुः पारियात्रिकः ।
लोकालोकश्चक्रवालोऽथ मेरुः कर्णिकाचलः ॥१०३१॥
रत्नसानुः सुमेरुः स्वः-स्वर्गि-काञ्चनतो गिरिः ।
शृङ्गं तु शिखरं कूटं, प्रपातस्त्वतटो भृगुः ॥१०३२॥
मेखला मध्यभागोऽद्रेर्नितम्बः कटकश्च सः ।
दरी स्यात्कन्दरोऽखातबिले तु गह्वरं गुहा ॥१०३३॥
द्रोणी तु शैलयोः सन्धिः, पादाः पर्यन्तपर्वताः ।
दन्तकास्तु बहिस्तिर्यक्प्रदेशा निर्गता गिरेः ॥१०३४॥

अधित्यकोर्ध्वभूमिः स्यादधोभूमिरुपत्यका ।
स्नुः प्रस्थः सानुरश्मा तु, पाषाणः प्रस्तरो दृषद् ॥१०३५॥
ग्रावा शिलोपलो गण्डशैलाः स्थूलोपलाश्च्युताः ।
स्यादाकरः खनिः खानिर्गञ्जो धातुस्तु गैरिकम् ॥१०३६॥
शुक्लधातौ पाकशुक्ला, कठिनी खटिनी खटी ।
लोहं कालायसं शस्त्रं, पिण्डं पारशवं घनम् ॥१०३७॥
गिरिसारं शिलासारं, तीक्ष्णंकृष्णामिषे अयः ।
सिंहान-धूर्त्त-मण्डूर-मलान्यस्य किट्टके ॥१०३८॥
सर्वं च तैजसं लोहं, विकारस्त्वयसः कुशी ।
ताम्रं म्लेच्छमुखं शुल्वं, रक्तं द्व्यष्टमुदुम्बरम् ॥१०३९॥
म्लेच्छशाबरभेदाख्यं, मर्कटास्यं कनीयसम् ।
ब्रह्मवर्द्धनं वरिष्ठं, सीसं तु सीसपत्रकम् ॥१०४०॥
नागं गण्डूपदभवं, वप्रं सिन्दूरकारणम् ।
वर्ध्रं स्वर्णारियोगेष्टं, यवनेष्टं सुवर्णकम् ॥१०४१॥

---

०१ सुवर्णं १ रजतं २ ताम्रं ३ रीतिः ४ कांस्यं ५ तथा त्रपु ६ । सीसं ७ च धीवरं ८ चैव, अष्टौ लोहानि चक्षते ॥१॥

वङ्गं[1] त्रपुः[2] स्वर्णजं[3] नागजीवने[4],
मृद्वङ्ग[5]रङ्गे[6] पुरुपत्र[7]पिच्चटे[8] ।
स्याच्चक्रसंज्ञं[9] तमरं[10] च नागजं[11]
कस्[12]तीरमालीन[13]कसिंहले[14] अपि ॥१०४२॥

स्याद्रूप्यं[1] कलधौत[2]तार[3]रजत[4]श्वेतानि[5] दुर्वर्णकं[6],
खर्जूरं[7] च हिमांशुहंसकुमुदाभिख्यं[8] सुवर्णं[1] पुनः ।
स्वर्णं[2] हेम[3] हिरण्य[4]हाटक[5]वसून्[6]यष्टापदं[7] काञ्चनं[8]
कल्याणं[9] कनकं[10] महारजत[11]रै[12]गाङ्गेय[13]रुक्माण्य[14]पि ॥१०४३॥

कलधौत[15]लोहोत्तम[16]वह्निबीजा[17]-
न्यपि गारुडं[18] गैरिक[19]जातरूपे[20] ।
तपनीय[21]चामीकर[22]चन्द्र[23]भर्मा[24]-
ऽर्जुन[25]निष्क[26]कार्तस्वर[27]कर्बुराणि[28] ॥१०४४॥

जाम्बूनदं[29] शातकुम्भं[30], रजतं[31] भूरि[32] भूत्तमम्[33] ।
हिरण्यकोशा[1]कुप्यानि[3], हेम्नि रूप्ये कृताकृते ॥१०४५॥

कुप्यन्तु तद्द्वयादन्यद्रूप्यन्तु द्वयमाहतम् ।
अलङ्कारसुवर्णं तु, शृङ्गीकनकमायुषम् ॥१०४६॥
रजत च सुवर्ण च, सश्लिष्टे घनगोलकं ।
पित्तलाऽऽरेऽपारकूटः, कपिलोह सुवर्णकम् ॥१०४७
रिरी रीरी च रीतिश्च, पीतलोहं सुलोहकम् ।
ब्राह्मी तु राज्ञी कपिलां, ब्रह्मरीतिर्महेश्वरी ॥१०४८॥
कांस्ये विद्युत्प्रियं घोषः, प्रकाश वङ्गशुल्वजम् ।
घण्टाशब्दमसुराह्व, रवण लोहज मलम् ॥१०४९॥
सौराष्ट्रके पञ्चलोह, वर्त्तलोह तु वर्त्तकम् ।
पारद पारतः सुतो, हरबीज रसश्चलम् ॥१०५०॥
अभ्रक स्वच्छपत्र खमेघाख्य गिरिजामले ।
स्रोतोऽञ्जन तु कापोत, सौवीर कृष्णयामुने ॥१०५१॥
अथ तुत्थ शिखिग्रीव, तुत्थाञ्जनमयूरके ।
मूषातुत्थ कांस्यनील, हेमतार वितुन्नकम् ॥१०५२॥

---

०१ आहतरूप्योत्पन्नो लोके "रूपैया" इति ख्यात । तथा "पैसा इति अन्य । ०२ "कुन्दन" इति प्रसिद्ध ०३ पञ्च ताम्ररीतित्रपुसीसककालायसलक्षणानि लौहानि यस्मिन् कांस्यभेद ।

स्यात्तु कर्परिकातुत्थम[1]मृतासङ्ग[2]मञ्जनम्[3] ।
रसगर्भं[1] तार्क्ष्यशैलं[2], तुत्थे दार्वीरसोद्भवे ॥१०५३॥

पुष्पाञ्जनं[1] रीतिपुष्पं[2], पौष्पकं[3] पुष्पकेतु[4] च ।
माक्षिकं[1] तु कदम्बः[2] स्यात्, चक्रनामा[3]ऽजनामकः[4] ॥१०५४॥

ताप्यो[1] नदीजः[2] कामारि[3]स्तारारि[4]र्विटमाक्षिकः[5] ।
सौराष्ट्री[1] पार्वती[2] काक्षी[3], कालिका[4] पर्पटी[5] सती[6] ॥१०५५॥

आढकी[7] तुवरी[8] कंसोद्भवा[9] काच्छी[10] मृदाह्वया[11] ।
कासीसं[1] धातुकासीसं[2], खेचरं[3] धातुशेखरम्[4] ॥१०५६॥

द्वितीयं पुष्पिकासीसं[1], कंसकं[2] नयनौषधम्[3] ।
गन्धाश्मा[1] शुल्व[2]गामा[3]-कुष्ठा[4]रिर्गन्धिक[5]गन्धकौ[6] ॥१०५७॥

सौगन्धिकः[7] शुकपुच्छो[8], हरितालं[1] तु पिञ्जरम्[2] ।
बिडालकं[3] विस्रगन्धि[4], खर्जूरं[5] वंशपत्रकम्[6] ॥१०५८॥

आलं[7] पीतनं[8] तालानि[9], गोदन्तं[10] नटमण्डनम्[11] ।
वङ्गारि[12]र्लोमहृच्चा[13]थ, मनोगुप्ता[1] मनःशिला[2] ॥१०५९॥

करवीरा[3] नागमाता[4], रोचनी[5] रसनेत्रिका[6] ।
नेपाली[7] कुनटी[8] गोला[9], मनोह्वा[10] नागजिह्विका[11] ॥१०६०॥

सिन्दूरं नागजं नागरक्तं शृङ्गारभूषणम् ।
चीनपिष्टं हंसपादः कुरुविन्दं तु हिङ्गुलम् ॥१०६१॥
शिलाजतु स्याद्गिरिजमर्थ्यं गैरेयमश्मजम् ।
क्षारे काचः कुलाली तु, स्याच्चक्षुष्या कुलत्थिका ॥१०६२
बोलो गन्धरसः प्राणः, पिण्डो गोपरसः शशः ।
रत्नं वसु मणिस्तत्र, वैडूर्यं बालवायजम् ॥१०६३॥
मरकतं त्वश्मगर्भो, गारुत्मतं हरिन्मणिः ।
पद्मरागो लोहितकलक्ष्मीपुष्पारुणोपलौ ॥१०६४॥
नीलमणिस्त्विन्द्रनीलः, सूचीमुखं तु हीरकम् ।
वरारकं रत्नमुख्यं, वज्रं पर्यायनाम च ॥१०६५॥
विराटजो राजपट्टो, राजावर्त्तोऽथ विद्रुमः ।
रक्ताङ्गो रक्तकन्दश्च, प्रवालं हेमकन्दलः ॥१०६६॥
सूर्यकान्तः सूर्यमणिः, सूर्याश्मा दहनोपलः ।
चन्द्रकान्तश्चन्द्रमणिश्चान्द्रश्चन्द्रोपलश्च सः ॥१०६७॥
क्षीरतैलस्फटिकाभ्यामन्यौ स्वस्फटिकाविमौ ।
शुक्तिजं मौक्तिकं मुक्ता,मुक्ताफलं रसोद्भवम् ॥१०६८॥

इति पृथ्वीकायः ॥

---

०१ हस्तिमस्तकाद्युद्भवमपि मौक्तिकमुच्यते, यदाह—" हस्ति-

## अथाप्कायः ।

नीरं[1] वारि[2] जलं[3] दकं[4] कमुदकं[5,6] पानीयम[7]म्भः[8] कुशं[9]
तोयं[10] जीवनं[11] जीवनीयं[12] सलिलं[13] अर्णां[14]स्यम्बु[15] वाः[16] संवरम्[17] ।
क्षीरं[18] पुष्करं[19] मेघपुष्पं[20] कमलान्या[21]पः[22] पयः[23]पाथसी,[24]
कीलालं[25] भुवनं[26] वनं[27] घनरसो[28] यादोनिवासो[29]ऽमृतम्[30] ॥१०६९॥
कुलीनसं[31] कबन्धं[32] च, प्राणदं[33] सर्वतोमुखम्[34] ।
अस्थाघो[1]ऽस्थागो[2]ऽस्ताघ[3]मगाधं[4] चातलस्पृशि[5] ॥१०७०॥
निम्नं[1] गभीरं[2] गम्भीर[3]मुत्तानं[1] तद्विलक्षणम् ।
अच्छं[1] प्रसन्नं[2] अनच्छं[1] स्यादाविलं[2] कलुषं[3] च तत् १०७१
अवश्याय[1]स्तु तुहिनं[2], प्रालेयं[3] मिहिका[4] हिमम्[5] ।
स्यान्नीहार[6]स्तुषार[7]श्च, हिमानी[1] तु महद्धिमम् ॥१०७२॥

पारावारः[1] सागरो[2]ऽवारपारो[3]-
ऽकूपारो[4]दध्य[5]र्णवौ[6] वीचिमाली[7] ।
यादः-स्रोतो-वा-नदी-शः[8-11] सरस्वान्[12] ।
सिन्धु[13]रुद्न्वन्तौ[14] मितद्रुः[15] समुद्रः[16] ॥१०७३॥

---

मस्तकदन्तौ तु, दंष्ट्रा शुनवराहयोः । मेघो भुजङ्गमो वेणुर्मत्स्यो मौक्तिकयोनयः ॥ १ ॥ " इति ।

आकरो मकरोदन्वज्जलान्निधि-वि-राशयः

द्वीपान्तरा अमङ्क्ष्वाम्न, मसैनति तु लौकिकाः ॥१०७४॥

लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारय ।

तरङ्गे भङ्गवीच्यूर्म्युत्कलिका महति त्विह ॥१०७५॥

लहर्युल्लोलकल्लोला, आवर्त्तः पयसाम्भ्रमः ।

तालूरो वोलश्चामौ, वेला स्याद वृद्धिरम्भसः ॥१०७६॥

डिण्डीरोऽब्धिकफे फेनो, बुद्बुदस्थासकौ समौ ।

मर्यादा कूलमुं कूलं, प्रपातः कच्छोरोवसी ॥१०७७॥

तटं तीरं प्रतीरं च, पुलिनं तज्जलोज्झितम् ।

सैकतं चान्तरीपं तु, द्वीपमन्तर्जले तटम ॥१०७८॥

तत्परं पारमवारं, त्ववाक् पात्रं तदन्तरम् ।

नदी हिरण्यवर्णा स्याद्रोधोवक्रा तरङ्गिणी ॥१०७९॥

सिन्धुः शैवलिनी वहा च ह्रदिनी स्रोतस्विनी निम्नगा,

स्रोतो निर्झरिणी सरिच्च तटिनी कूलंकषा वाहिनी ।

कर्षूर्द्वीपवती समुद्रदयिता धुन्यौ स्रवन्तीसर-

स्वत्यौ पर्वतजाऽऽपगा जलधिगा कर्ष्वौ च सम्भेदिनी ॥

गङ्गा त्रिपथगा भागीरथी त्रिदशदीर्घिका ।
त्रिस्रोता जाह्नवी मन्दाकिनी भीष्मकुमारसूः ॥१०८१॥
सरिद्वरा विष्णुपदी, सिद्ध-स्वः-स्वर्गि-स्वापगा ।
ऋषिकुल्या हैमवती, स्वर्वापी हरशेखरा ॥१०८२॥
यमुना यमभगिनी, कालिन्दी सूर्यजा यमी ।
रेवेन्दुजा पूर्वगङ्गा, नर्मदा मेखलाद्रिजा ॥१०८३॥
गोदा गोदावरी तापी, तपनी तपनात्मजा ।
शुतुद्रिस्तु शतद्रुः स्यात्, कावेरी त्वर्द्धजाह्नवी ॥१०८४॥
करतोया सदानीरा, चन्द्रभागा तु चन्द्रका ।
वाशिष्ठी गोमती तुल्ये, ब्रह्मपुत्री सरस्वती ॥१०८५॥
विपाट् विपाशाऽर्जुनी तु, बाहुदा सैतवाहिनी ।
वैतरणी नरकस्था, स्रोतोऽम्भःसरणं स्वतः ॥१०८६॥
प्रवाहः पुनरोघः स्याद्, वेणी धारा रयश्च सः ।
घट्टस्तीर्थोऽवतारेऽम्बुवृद्धौ पूरः प्लवोऽपि च ॥१०८७॥
पुटभेदास्तु वक्राणि, भ्रमास्तु जलनिर्गमाः ।
परिवाहा जलोच्छ्वासाः, कूपकास्तु विदारकाः ॥१०८८॥

प्रणाली जलमार्गोऽथ, पानं कुल्या च सारणिः ।
सिकता वालुका बिन्दौ, पृषत्पृषतविप्रुषः ॥१०८९॥
जम्बालनिक्वौ पङ्कः, कर्दमश्च निषद्वरः ।
वादो हिरण्यबाहुस्तु, शोणो नदे पुनर्वहः ॥१०९०॥
पिथे उद्वचे मारत्राश्चे, द्रहोऽगाधजलो ह्रदः ।
कूपः स्यादुदपानोऽन्धुः, प्रहिर्नेमी तु तन्त्रिका ॥१०९१॥
नान्दीमुखो नान्दीपटो, वीनाहो मुखबन्धने ।
आहावस्तु निपानं स्यादुपकूपेऽथ दीर्घिका ॥१०९२॥
वापी स्यात् क्षुद्रकूपे तु, चुरा चुण्डी च चूतकः ।
उद्घाटकं घटीयन्त्रं, पादावर्तोऽरघट्टकः ॥१०९३॥
अखातं तु देवखातं, पुष्करिण्यां तु खातकम् ।
पद्माकरस्तडागः स्यात्, कासारः सरसी सरः ॥१०९४॥
वेशन्तः पल्वलोऽल्पं तत्, परिखा खेयखातिके ।
स्यादालवालमावालमावापः स्यानकं च स ॥१०९५॥
आधारस्त्वम्भसां बन्धो, निर्झरस्तु झरः सरिः ।
उत्सः स्रवः प्रस्रवणं, जलाधारो जलाशयः ॥१०९६॥
इत्यप्कायः ।

## अथ तेजस्कायः ।

वह्निर्बृहद्भानुहिरण्यरेतसौ,
धनञ्जयो हव्यहविर्हुताशनाः ।
कृपीटयोनिर्दहनो विरोचना-
ऽऽशुशुक्षणी छागरथस्तनूनपात् ॥१०९७॥
कृशानुवैश्वानरवीतिहोत्राः,
वृषाकपिः पावकचित्रभानू ।
अप्पित्तधूमध्वजकृष्णवर्त्मा-
र्चिष्मच्छमीगर्भतमोघ्नशुक्राः ॥१०९८॥

शोचिष्केशः शुचिर्हुतवहोषर्बुधाः सप्तमन्त्र-
ज्वालाजिह्वो ज्वलनशिखिनौ जागृविर्जातवेदाः ।
बर्हिःशुष्मानिलसखवसू रोहिताश्वाश्रयाशौ,
बर्हिर्ज्योतिर्दहनबहुलौ हव्यवाहोऽनलोऽग्निः ॥१०९९॥
विभावसुः समोदर्चिः, स्वाहोऽग्नायी प्रियाऽस्य च ।
और्वः संवर्तकोऽब्ध्यग्निर्वाडवो वडवामुखः ॥११००॥

दवो दावो वनवह्निर्मेघवह्निरिरम्मदे ।
छगणस्तु करीषाग्नि, कुकूलस्तु तुषानले ॥११०१॥
सन्तापे सञ्ज्वरो ज्वाले, ऊर्म्यो जिह्वा स्युरर्चिषः ।
हेति कीलो शिखा ज्वालाऽर्चिरल्को महत्यसौ ११०२
स्फुलिङ्गोऽग्निकणोऽलातन्त्वोल्काऽलातमुल्मुकम् ।
धूमे स्याद्वायुवाहोऽग्निवाहो दहनकेतनम् ॥११०३॥
भस्मस्तु करपाऊर्ध्वं, स्तरी जीमूतवाह्यपि ।
तडिद्वेगवती विद्युच्चला शम्पाऽचिरप्रभा ॥११०४॥
आकालिकी शतह्रदा, चञ्चला चपलाऽशनि ।
सौदामिनी क्षणिका च, ह्रादिनी जलवालिका ॥११०५॥

इति तेजस्काय ।

## अथ वायुकायः ।

वायु समीरसमिरो पवनाशुगो नभ —
श्वासो नभस्वद्निःश्वसनो समीरणं ।
वीतोऽहिकान्तपवमानमहाप्रकम्पनो ,
कम्पाकनित्यगतिगन्धवहप्रभञ्जनो ॥११०६॥

मातरिश्वा[21] जगत्प्राणः[22], पृषदश्वो[23] महाबलः[24]।
मारुतः[24] स्पर्शनो[25] दैत्यदेवो[26] झञ्झा[1] स वृष्टियुक् ११०७
प्राणो[1] नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचरः।
अपानः[1] पवनो मन्यापृष्ठपृष्ठान्तगोचरः।
समानः[1] सन्धिहृन्नाभिषूदानो[1] हृच्छिरोऽन्तरे।
सर्वत्वग्वृत्तिको व्यानः[1], इत्यङ्गे पञ्च वायवः ॥११०९॥

इति वायुकायः।

## अथ वनस्पतिकायः।

अरण्यम्[1] अटवी[2] सत्रं[3], वार्क्षं[4] च गहनं[5] झषः[6]।
कान्तारं[7] विपिनं[8] कक्षः[9], स्यात् षण्डं[10] काननं[11] वनम्[12] १११०
दवो[13] दावः[14] प्रस्तारस्तु[1], तृणाटव्यां झषोऽपि[3] च।
अपोराम्यां वनं[2] वेलं[1] आरामः[1] कृत्रिमे वने ॥११११॥
निष्कुटस्तु[1] गृहारामो[2], बाह्यारामस्तु पौरकः[1]।
आक्रीडः[1] पुनरुद्यानं[2], राज्ञां त्वन्तःपुरोचितम् ॥१११२॥
तदेव प्रमदवनम्[1] अमात्यादेस्तु निष्कुटे।
वाटी[1] पुष्पादिवृक्षाद्यासौ, क्षुद्रारामः प्रसीदिका[1]॥१११३॥

वृक्षोऽगे शिखरी च शाखिफलदावद्रिर्हरिद्रुर्द्रुमो,
जीर्णो द्रुर्विटपी कुटः क्षितिरुहे कारस्करो विष्टरे ।
नन्द्यावर्त्तकरालिकौ तरुवसू पर्णी पुलोक्यङ्घ्रिप,
सालोऽनोकहहगच्छेशादपनगौ रूक्षागमौ पुष्पदः ॥१११४॥
कुञ्जनिकुञ्जकुडङ्गाः, स्थाने वृक्षैर्वृतान्तरे ।
पुष्पैस्तु फलवान् वृक्षो, वानस्पत्यो विना तु तैः १११५
फलवान् वनस्पति स्यात्, फलावन्ध्य फलग्रहिः ।
फलवन्ध्यस्त्ववकशी, फलवान् फलिनः फली ॥१११६॥
ओषधि स्यादोषधिश्चै, फलपाकावसानिका ।
क्षुपो ह्रस्वशिफाशाख, प्रततिर्व्रततिर्लता ॥१११७॥
वल्ल्यस्या तु प्रतानिन्यां, गुल्मिन्युलपवीरुधे ।
स्यात्प्ररोहोऽङ्कुरोऽङ्कूरो, रोहश्चै स तु पर्व्वण: ॥१११८॥
समुत्थित स्याद्विटप, शिखाशाखालताः समा ।
साला शाला स्कन्धशाखा, स्कन्धः प्रकाण्डमस्तकम् १११९
मूलाच्छाखावधिर्गण्डि, प्रकाण्डोऽथ जटा शिफा ।
प्रकाण्डरहिते स्तम्बो, विटपो गुल्म इत्यपि ॥११२०॥

शिरोनामाग्रं शिखरं, मूले बुध्नोऽङ्घ्रिनामकं च ।
सारो मज्जनि त्वचि च्छल्ली, चोचं वल्कं च वल्कलम् ॥११२१॥
स्थाणौ तु ध्रुवकः शङ्कुः, काष्ठे दलिकं दारुणी ।
निष्कुहः कोटरो मञ्जी, मञ्जरिर्वल्लरिश्च सा ॥११२२॥
पत्रं पलाशं छदनं, बर्हं पर्णं छदं दलम् ।
नवे तस्मिन् किशलयं, किशलं पल्लवोऽत्र तु ॥११२३॥
नवे प्रवालोऽस्य कोशी, शुङ्गा मोढिर्वल्लभा ।
विस्तारविटपौ तुल्यौ, प्रसूनं कुसुमं सुमम् ॥११२४॥
पुष्पं सूनं सुमनसः, प्रसवश्च मणीवकम् ।
जालकक्षारकौ तुल्यौ, कलिकायां तु कोरकः ॥११२५॥
कुड्मले मुकुलं गुच्छे, गुच्छस्तबकगुत्सकाः ।
गुलुञ्छोऽथ रजः पौष्पं परागोऽथ रसो मधु ॥११२६॥
मकरन्दो मरन्दश्च, वृन्तं प्रसवबन्धनम् ।
प्रबुद्धोज्जृम्भफुल्लानि, व्याकोशं विकचं स्मितम् ॥११२७
उन्मिषितं विकसितं, दलितं स्फुटितं स्फुटम् ।
प्रफुल्लोत्फुल्लसम्फुल्लोच्छ्वसितानि विजृम्भितम् ॥११२८॥

स्मेरं विनिद्रमुन्निद्रविबुद्धेहसितानि च ।
सङ्कुचितं तु निद्राणं, मीलितं मुद्रितं च तत् ॥११२९॥
फलं तु सस्यं तच्छुष्कं, वानमामं शलाटु च ।
ग्रन्थिः पर्व परुर्वीनकोशी शिम्बा शमिः शमी ॥११३०॥
शिम्बिश्च पिप्पलोऽश्वत्थः, श्रीवृक्षः कुञ्जराशनः ।
कृष्णावासो बोधितरुः, प्लक्षस्तु पर्कटी जटी ॥११३१॥
न्यग्रोधस्तु बहुपात् स्याद्वटो वैश्रवणालयः ।
उदुम्बरो जन्तुफलो, मशको हेमदुग्धकः ॥११३२॥
काकोदुम्बरिका फल्गुर्मलयुर्जघनेफला ।
आम्रश्चूतः सहकारः, सप्तपर्णस्त्वयुक्छदः ॥११३३॥
शिग्रुः शोभाञ्जनोऽक्षीवस्तीक्ष्णगन्धकमोचकौ ।
श्वेतेऽत्र श्वेतमरिचः, पुन्नागः सुरपर्णिकः ॥११३४॥
बकुलः केसरोऽशोकः, कङ्केलिः ककुभोऽर्जुनः ।
मालूरः श्रीफलो बिल्वः, किङ्किरातः कुरण्टकः ॥११३५॥
त्रिपत्रकः पलाशः स्यात्, किंशुको ब्रह्मपादपः ।
तृणराजस्तलस्तालो, रम्भा मोचा कदल्यपि ॥११३६॥
करवीरो हयमारः, कुटजो गिरिमल्लिका ।
विदुलो वेतसः शीतो, वानीरो वञ्जुलो रथः ॥११३७॥

कर्कन्धूः कुवली कोली, वदर्यथ हलिप्रियः ।
नीपः कदम्बः सालस्तु, सर्जोऽरिष्टस्तु फेनिलः ॥११३८॥
निम्बोऽरिष्टः पिचुमन्दः, समौ पिचुलझावुकौ ।
कार्पासस्तु वादरः स्यात्, पिचव्यस्तूलकं पिचुः ॥११३९॥
आरग्वधः कृतमाले, वृषो वासाऽऽटरूषके ।
करञ्जस्तु नक्तमालः, स्नुहिर्वज्री महातरुः ॥११४०॥
महाकालस्तु किम्पाके, मन्दारः पारिभद्रके ।
मधूकस्तु मधुष्ठीलो, गुडपुष्पो मधुद्रुमः ॥११४१॥
पीलुः सितो गुडफलो, गुग्गुलुस्तु पलङ्कषः ।
राजादनः पियालः स्यात्तिनिशस्तु रथद्रुमः ॥११४२॥
नागरङ्गस्तु नारङ्गे, इङ्गुदी तापसद्रुमः ।
काश्मरी भद्रपर्णी श्रीपर्ण्यम्लिका तु तिन्तिडी ॥११४३॥
शेलुः श्लेष्मातकः पीतसालस्तु प्रियकोऽसनः ।
पाटलिः पाटला भूर्जो, बहुत्वक्को मृदुच्छदः ॥११४४
द्रुमोत्पलः कर्णिकारे, निचुले हिज्जलेज्जलौ ।
धात्री शिवा चामलकी, कलिरक्षो विभीतकः ॥११४५॥
हरितक्यभया पथ्या, त्रिफला तत् फलत्रयम् ।
तापिञ्छस्तु तमालः स्यात्कुम्भको हेमपुष्पकः ॥११४६॥

निर्गुण्डी सिन्दुवारोऽतिमुक्तक माधवी लता ।
वासन्ती चोड्रपुष्पं तु, जपा जातिस्तु मालती ॥११४७॥
मल्लिका स्याद्विचकिले, सप्तला नवमालिका ।
मागधी यूथिका सा तु, पीता स्याद्धेमपुष्पिका॥११४८॥
प्रियङ्गु फलिनी श्यामा, बन्धूको बन्धुजीवकै ।
करुणे मल्लिकापुष्पो, जम्बीरे जम्भजम्भलौ ॥११४९॥
मातुलुङ्गो बीजपूरे, करीरक्रकरौ समौ ।
पञ्चाङ्गुले स्यादेरण्डे, धातक्यो धातुपुष्पिका ॥११५०॥
कपिकच्छूरात्मगुप्ता, धत्तूरे कनकाह्वये ।
कपित्थस्तु दधिफलो, नारिकेलस्तु लाङ्गली ॥११५१॥
आम्रातको वर्षपाकी, केतकं क्रकचच्छदे ।
कोविदारो युग्मपत्रे, सल्लकी तु गजप्रिया ॥११५२॥
वंशो वेणुर्यवफलस्त्वचिसारस्तृणध्वजे ।
मस्करं शतपर्वा च, स्वनन् वातात्स कीचकं ॥११५३॥
तुकाक्षीरी वंशक्षीरी, त्वक्क्षीरी वंशरोचना ।
पूगे क्रमुकगुवाकौ, तस्योद्वेगं पुनः फलम् ॥११५४॥
ताम्बूलवल्ली ताम्बूली, नागवल्ल्यप्यथ ।
तुम्ब्यलाबू कृष्णला तु, गुञ्जा द्राक्षा तु गोस्तनी ११५५

मृद्वीका हारहूरा च, गोक्षुरस्तु त्रिकण्टकः ।
श्वदंष्ट्रा स्थलशृङ्गाटो, गिरिकर्णी पराजिता ॥११५६॥
व्याघ्री निदिग्धिका कण्टकारिका स्यादथामृता ।
वत्सादनी गुडूची च, विशाला त्विन्द्रवारुणी ॥११५७॥
उशीरं वीरणीमूले, ह्रीबेरं बालकं जलम् ।
प्रपुन्नाडस्त्वेडगजो, दद्रुघ्नश्चक्रमर्दकः ॥११५८॥
लट्वायां महारजनं, कुसुम्भं कमलोत्तरम ।
लोध्रे तु गालवो रोध्रतिल्वशावरमार्जनाः ॥११५९॥
मृणालिनी पुटकिनी, नलिनी पङ्कजिन्यपि ।
कमलं नलिनं पद्ममरविन्दं कुशेशयम् । ॥११६०॥
परं शतसहस्राभ्यां, पत्रे राजीवपुष्करे ।
बिसप्रसूनं नालीकं, तामरसं महोत्पलम् ॥११६१॥
तज्जलात् सरसः पङ्कात्परे रुट्-रुह-जन्म-जैः ।
पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ॥११६२॥
रक्तोत्पलं कोकनदं, कैरविण्यां कुमुद्वती ।
उत्पलं स्यात् कुवलयं, कुवेलं कुवलं कुवम् ॥११६३॥
श्वेते तु तत्र कुमुदं, कैरवं गर्दभाह्वयम् ।
नीले तु स्यादिन्दीवरं, हल्लकं रक्तसन्ध्यके ॥११६४॥

सौगन्धिकं तु कह्लार, बीजकोशो वराटकः ।
कर्णिका पद्मनाळं तु, मृणालं तन्तुलं बिसम् ॥११६५॥
किञ्जल्कं केसरं पत्रिका तु स्यात्तत्र दलम् ।
करहाटः शिफा च स्यात्, कन्दे सलिलजन्मनाम् ॥११६६

उत्पलाना तु शालूक, नील्या शैवालशैवले ।
शेवाळ शैवल शेपाल जलाच्चकर्नालिक ॥ ११६७ ॥
धान्य तु सस्य सीत्य च, व्रीहि स्तम्बकरिश्च तत् ।
आशुः स्यात् पटलो व्रीहिर्गर्भपाकी तु षष्टिकः॥११६८॥
शालय कलमाद्याः स्यु, कलमस्तु कलामकः ।
लोहितो रक्तशालिः स्यान्महाशालि सुगन्धिकः॥११६९
यवो हयप्रियस्तीक्ष्णशुकस्तोकमस्त्वसौ हरित् ।
मङ्गल्यको मसूरः स्यात्, कलायस्तु सतीनकः ॥११७०॥
हरेणुः खण्डिकश्चाथ, चणको हरिमन्थकः ।

---

०१ व्रीहि १ यवो २ मसूरो ३ गोधूमो ४ मुद्ग ५ माष-
६ तिल ७ चणका ८ । अणव ९ प्रियङ्गु १० कोद्रव ११-
मकुष्टका १२ शालि १३ आढक्य ॥१॥ किञ्च १४ कलाय-
१५ कुलत्थो १६ सणाथ १७ सप्तदशानि धान्यानि ॥

माषस्तु मदनो नन्दी, वृष्यो बीजवरो बली ॥११७१॥

मुद्गस्तु प्रथनो लोभ्यो, वर्णाटो हरितो हरिः ।

पीतेऽस्मिन् वसुखण्डीरप्रवेलजयशारदाः ॥११७२॥

कृष्णे प्रवरवामन्तहरिमन्थजशिम्बिकाः ।

वनमुद्गे तुवरक–निगूढक–कुलीनकाः ॥११७३॥

खण्डी च राजमुद्गे तु, मकुष्टकमयुष्टकौ ।

गोधूमः सुमनो वह्ले, निष्पावः शितशिम्बिकः ॥११७४॥

कुलत्थस्तु कालवृन्तस्ताम्रवृन्तो कुलत्थिका ।

आढकी तुवरी वर्णा, स्यात्कुल्माषस्तु यावकः ॥११७५॥

नीवारस्तु वनव्रीहिः, श्यामाकश्यामकौ समौ ।

कङ्गुस्तु कङ्गुनी कङ्गुः प्रियङ्गुः पीततण्डुला ॥११७६॥

सा कृष्णा मधुका रक्ता, शोधिका मुसटी सिता ।

पीता माधव्यथोद्दालः, कोद्रवः कोरदूषकः ॥११७७॥

चीनकस्तु काककङ्गुर्यवनालस्तु योनलः ।

जूर्णाह्वयो देवधान्यं, जोन्नाला बीजपुष्पिका ॥११७८॥

शणं मङ्गा मातुलानी, स्यादुमा तु क्षुमाऽतसी ।

गवेधुका गवेधुः स्याज्जर्त्तिलोऽरण्यजस्तिलः ॥११७९॥

पण्डतिले तिलपिञ्जस्तिलपेजोऽथ सर्षप ।
कदम्बकस्तन्तुभोऽथ, सिद्धार्थ श्वेतसर्षपे ॥११८०॥
माषादयः शमीधान्यं, शूकधान्यं यवादय ।
स्यात्सस्यशूकं किशारु, कणिश सस्यशीर्षकम ॥११८१॥
स्तम्बस्तु गुच्छो धान्यादेर्नालं काण्डोऽफलस्तु स. ।
पले पलालो धान्यत्वक्, तुषो बुसं कडङ्गर ॥११८२॥
धान्यमावसितं रिद्ध, तत्पून निर्बुसीकृतम् ।
मूलपत्रकरीराग्रफलकाण्डाऽधिरूढका. ॥११८३॥
त्वक् पुष्पं कवक शाकं, दशधा शिग्रुकश्च तत् ।
तण्डुलीयस्तण्डुलेरो, मेघनादोऽल्पमारिषे ॥११८४॥
बिम्बी रक्तफला पीलुपर्णी स्यात्तुण्डकेरिका ।
जीवन्ती जीवनी जीवा, जीवनीया मधुस्रवा ॥११८५॥
वास्तुक तु क्षारपत्रं, पालक्यो मधुसूदनी ।
रसोनो लशुनोऽरिष्टो, म्लेच्छकन्दो महौषधम् ॥११८६॥
महाकन्दो रसोनोऽन्यो, गृञ्जनो दीर्घपत्रक ।
भृङ्गरामो भृङ्गरजो, मार्कव केशरञ्जन ॥११८७॥
काकमाची वायसी स्यात्, कारवेल्ले कठिल्लक ।
कूष्माण्डकस्तु कर्कारु, कोशातकी पटोलिका ॥११८८॥

चिर्भिटी कर्कटी वालुङ्क्येर्वारुस्त्रपुसी च सा ।
अर्शोघ्नः सूरणः कन्दः, शृङ्गबेरकमार्द्रकम् ॥११८९॥
कर्कोटकः किलासघ्नस्तिक्तपत्रः सुगन्धकः ।
मूलकं तु हरिपर्णं, सेकिमं हस्तिदन्तकम् ॥११९०॥
तृणं नडादि नीवारादि च शष्पन्तु तन्नवम् ।
सौगन्धिकं देवजग्धं, पौरं कत्तृणरौहिषे ॥११९१॥
दर्भः कुशः कुथो बर्हिः, पवित्रमथ तेजनः ।
गुन्द्रो मुञ्जः शरो दूर्वा, त्वनन्ता शतपर्विका ॥११९२॥
हरिताली रुहा पोटगलस्तु धमनो नडः ।
कुरुविन्दो मेघनामा, मुस्ता गुन्द्रा तु सोत्तमा॥११९३॥
वल्वजा उलपोऽथेक्षुः, स्यादसालोऽसिपत्रकः ।
भेदाः कान्तारपुण्ड्राद्यास्तस्य मूलं तु मोरटम् ॥११९४॥
काशस्त्विषीका घासस्तु, यवसं तृणमर्जुनम् ।
विषं क्ष्वेडो रसस्तीक्ष्णं, गरलोऽथ हलाहलः ॥११९५॥
वत्सनाभः कालकूटो, ब्रह्मपुत्रः प्रदीपनः ।
सौराष्ट्रिकः शौल्किकेयः, काकोलो दारदोऽपि च ११९६

अहिच्छत्रो[१०] मेषशृङ्गे[११], कुष्टवाले[१२]कनन्दनौ[१३] ।
कैराटको[१५] हैमवतो[१६], मर्कट[१७] करवीरके[१८] ॥११९७॥
सर्पपो[१९] मूलको गौरार्द्रके[२१] सर्ककर्कदमौ[२२][२३] ।
अङ्कोल्लसारे[२४] कालिङ्गे[२५], शृङ्गिको[२६] मधुसिक्थके[२७] ॥११९८॥
इन्द्रो[२८] लाङ्गुलिको[२९] विस्फुलिङ्ग[३०]-पिङ्ग[३१]ौगौतमौ[३२] ।
मुस्तको[३३] दालवै[३४]श्चेति, स्याकरा विषमातय ॥११९९॥
कुरण्टाद्यो अग्रबीजा, मूलजास्तूत्पलादये ।
पर्वयोनय इस्वाद्याः, स्कन्धजा सल्लकीमुखा ॥१२००॥
शाल्यादयो बीजरुहा, सम्मूर्छजास्तृणादय ।
स्युर्वनस्पतिकायस्य, षडेता मूलजातय ॥१२०१॥

इति वनस्पतिकायः ।

## द्वीन्द्रियाः ।

नीलङ्गु कृमिरन्तर्ज, क्षुद्रकीटो बहिर्भव ।
पूलकोस्तुमयेऽपि स्यु, कीकसा कृमयोऽणव ॥१२०२॥
काष्ठकीटो घुणो गण्डूपद किञ्चुलके कुसू ।
भूलता गण्डूपदी तु, शिञ्चैत्वा जलौकसे ॥१२०३॥

जलालोका जलूका च, जलौका जलसर्पिणी ।
मुक्तास्फोटोऽब्धिमण्डूकी, शुक्तिः कम्बुस्तु वारिजः १२०४
त्रिरेखः षोडशावर्त्तः, शङ्खोऽथ क्षुद्रकम्बवः ।
शङ्खनकाः क्षुल्लकाश्च, शम्बूकास्त्वम्बुमात्रजाः ॥१२०५॥
कपर्दस्तु हिरण्यः स्यात्, पणास्थिकवराटकौ ।

इति द्वीन्द्रियाः ।

## त्रीन्द्रियाः ।

द्रुर्नामा तु दीर्घकोशी, पिपीलिकस्तु पीलकः ॥१२०६॥
पिपीलिका तु हीनाङ्गी, ब्राह्मणी स्थूलशीर्षिका ।
घृतेली पिङ्गकपिशाऽथोपजिह्वोपदेहिका ॥१२०७॥
वम्र्युपदीका-लिक्षा तु, रिक्षा यूका तु षट्पदी ।
गोपालिका महाभीरुर्गोमयोत्था तु गर्दभी ॥१२०८
मत्कुणस्तु कोलकुणो, उद्दंशः किटिमोत्कुणौ ।
इन्द्रगोपस्त्वग्निरजो, वैराटस्तित्तिभोऽग्निकः ॥१२०९
कर्णजलौका तु कर्णकीटी शतपदी च सा ।

इति त्रीन्द्रियाः ।

## चतुरिन्द्रियाः ।

ऊर्णनाभस्तन्तुवायो, जालिको जालकारकः ॥१२१०॥

कृमिर्मर्कटको लूता, लालास्रावोऽष्टपाच्च सः ।
वृश्चिको द्रुण आल्यालिरल तत्पुच्छकण्टकः ॥१२११॥
भ्रमरो मधुकृद् भृङ्गश्चञ्चरीकः शिलीमुखः ।
इन्दिन्दिरोऽली रोलम्बो, द्विरेफोऽस्य षडङ्घ्रयः १२१२
भोज्यन्तु पुष्पमधुनी, खद्योतो ज्योतिरिङ्गणः ।
पतङ्गः शलभः क्षुद्रा, सरघा मधुमक्षिका ॥१२१३॥
माक्षिकादि तु मधु स्यात्, मधूच्छिष्टं तु सिक्थकम् ।
वर्वणा मक्षिका नीला, पुत्तिका तु पतङ्गिका ॥१२१४॥
वनमक्षिका तु दंशो, दंशी तज्जातिरल्पिका ।
तैलाटी वरटा गन्धोली स्याच्चीरी तु चीरुका ॥१२१५॥
झिल्लीका झिल्लिका वर्षकरी भृङ्गारिका च सा ।

## चतुरिन्द्रियाः ।

## पञ्चेन्द्रियाः

पशुस्तिर्यङ् चरिर्हिस्रोऽस्मिन् व्यालः श्वापदोऽपि च ॥१२१६॥

हस्ती मतङ्गजगजद्विपकर्यनेकपाः,
मातङ्गवारणमहामृगसामयोनयः ।

स्तम्बेरम[११]द्विरद[१२]सिन्धुर[१३]नाग[१४]दन्तिनो[१५],
दन्तावल[१६]: करटि[१७]कुञ्जर[१८]कुम्भिपीलवः ॥१२१७॥

इभः[२१] करेणु[२२]र्गजो[२३]ऽस्य, स्त्री धेनुका[१] वशा[२]ऽपि च ।
भद्रो मन्दो मृगो मिश्रश्चतस्रो गजजातयः ॥१२१८॥

कालेऽप्यजातदन्तश्च, स्वल्पाङ्गश्चापि मत्कुणो[१] ।
पञ्चवर्षो गजो बालः, स्यात्पोतो[१] दशवर्षकः ॥१२१९॥

विक्को विंशतिवर्षः स्यात्, कलभस्त्रिंशदब्दकः ।
यूथनाथो[१] यूथपति[२]र्मत्ते प्रभिन्नगर्जितौ[३] ॥१२२०॥

मदोत्कटो[१] मदकलः, समावुद्रान्तनिर्मदौ[२] ।
सज्जितः कल्पितस्तिर्यग्घाती परिणतो[१] गजः ॥१२२१॥

व्यालो[१] दुष्टगजो[२] गम्भीरवेधीवमताङ्कुशः ।
राजवाह्यस्तूपवाह्यः, सन्नाह्यः समरोचितः ॥१२२२॥

उदग्रदन्[१]नीषादन्तौ[२], बहूनां घटना घटा ।
मदो[१] दानं[२] प्रवृत्तिश्च[३], वमथुः करशीकरः ॥१२२३॥

हस्तिनासा करः शुण्डा, हस्तोऽस्याग्रं तु पुष्करम् ।
अङ्गुलिः कर्णिका[१] दन्तौ[१], विषाणौ[२] स्कन्धे आसनम् ॥१२२

कर्णमूलं चूलिका स्यादीषिका त्वक्षिकूटकम् ।
अपाङ्गदेशो निर्याणं, गण्डस्तु करटः कटः[३] ॥१२२५

अवग्रहो ललाटं स्यादासनं कुम्भयोरधः ।
कुम्भौ तु शिरसः पिण्डौ, कुम्भयोरन्तरं विदु ॥१२२६॥
वातकुम्भस्तु तस्याधो, वाहित्थं तु ततोऽप्यधः ।
वाहित्थाधः प्रतिमानं, पुच्छमूलं तु पेचकः ॥१२२७॥
दन्तभागः पुरोभागः, पक्षभागस्तु पार्श्वकः ।
पूर्वस्तु जङ्घादिदेशो, गात्रं स्यात्पश्चिमोऽपरः ॥१२२८॥
बिन्दुजालं पुनः पद्मं, शृङ्खलो निगडोऽन्दुकः ।
हिञ्जीरश्च पादपाशो, वारिस्तु गजबन्धभूः ॥१२२९॥
त्रिपदी गात्रयोर्बन्धः, एकस्मिन्नपरेऽपि च ।
तोत्रं वेणुकमालानं, बन्धस्तम्भोऽङ्कुशः सृणिः ॥१२३०॥
अपष्ठं त्वङ्कुशस्याग्रं, यातमङ्कुशवारणम् ।
निषादिनां पादकर्म, यतं वीतं तु तद्द्वयम् ॥१२३१॥
कक्ष्या दूष्या वरत्रा स्यात्, कण्ठबन्धः कलापकः ।
घोटकस्तुरगस्तार्क्ष्यस्तुरङ्गोऽश्वस्तुरङ्गमः ॥१२३२॥
गन्धर्वोऽर्वा सप्तिर्वीती, वाहो वाजी हयो हरिः ।
वडवोऽस्यां प्रसूर्वामी, किशोरोऽल्पवया हयः ॥१२३३॥
जवाधिकस्तु जवनो, रथ्यो वोढा रथस्य यः ।
आजानेयः कुलीनः स्यात्, तत्तद्देशात्तु सैन्धवः ॥१२३४॥

वानायुजाः पारसीकाः, काम्बोजा वाह्लिकादयः ।
विनीतस्तु साधुवाही, दुर्विनीतस्तु शूकलः ॥१२३५॥
कश्यः कशार्हो हृदावर्ती श्रीवत्सकी हयः ।
पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥१२३६॥
पुच्छोरःखुरकेशास्यैः, सितैः स्यादष्टमङ्गलः ।
सितं तु कर्ककोकाहौ, खोङ्गाहः श्वेतपिङ्गले ॥१२३७॥
पीयूषवर्णे सेराहः, पीते तु हरियो हये ।
कृष्णवर्णे तु खुङ्गाहः, कियाहो लोहितो हयः ॥१२३८॥
आनीलस्तु नीलकोऽथ, त्रियूहः कपिलो हयः ।
वोल्लाहस्त्वयमेव स्यात्, पाण्डुकेशरबालधिः ॥१२३९॥
उराहस्तु मनाक्पाण्डुः, कृष्णजङ्घो भवेद्यदि ।
सुरूहको गर्दभाभो, वोरुखानस्तु पाटलः ॥१२४०॥
कुलाहस्तु मनाक् पीतः, कृष्णः स्याद्यदि जानुनि ।
उकनाहः पीतरक्तच्छायः स एव तु क्वचित् ॥१२४१॥
कृष्णरक्तच्छविः प्रोक्तः, शोणः कोकनदच्छविः ।
हरिकः पीतहरितच्छायः स एव हालकः ॥१२४२॥
पङ्गुलः सितकाचाभो, हलाहश्चित्रितो हयः ।
ययुरश्वोऽश्वमेधीयः, प्रोथमश्वस्य नासिका ॥१२४३॥

मध्य करंय निगालस्तु, गलोद्देश॰ खुरा शफो॰ ।
अथ पुच्छ वालहस्तो, लाङ्गूल लूमं वालधि॰ ॥१२४४॥
धपावृत्तपरावृत्तलुठितानि तु वेल्लितं ।
धोरित वल्गित प्लुतोत्तेजितोत्तेरितानि च ॥१२४५॥
गतयः पञ्च धाराख्यास्तुरङ्गाणा क्रमादिमा॰ ।
तत्र धौरितक धौर्यं, धोरण धोरित च तत् ॥१२४६॥
बभ्रुकङ्कशिखिक्रोडगतिवत् वल्गित पुन ।
अग्रकायसमुल्लासात्, कुञ्चितास्य नतत्रिकम् ॥१२४७॥
प्लुत तु लङ्घन पक्षिमृगगत्यनुहारकम् ।
उत्तेजित रेचित स्यान्मध्यवेगेन या गतिः ॥१२४८॥
उत्तेरितमुपकण्ठेमास्कन्दितकमित्यपि ।
उत्प्लुत्योत्प्लुत्य गमन, कोपादिवाखिले पदे ॥१२४९॥
आश्वीनोऽध्वा स योऽश्वेन, दिनेनैकेन गम्यते ।
कवी खलीनं कविको, कविय मुखयन्त्रणम् ॥१२५०॥
पद्धाङ्गी चक्रपट्टे तु, तलिको तलसारकम् ।
दामञ्जन पादपाशे, प्रक्षर प्रखर समौ ॥१२५१॥
चर्म्मदण्डे कशा रश्मी, वल्गोऽवक्षेपणी कुशो ।
पर्य्याणन्तु पल्ययन, वीत फल्गु हयद्विपम् ॥१२५२॥

वेसरोऽश्वतरो वेगसरश्चाथ क्रमेलकः ।
कुलनाशः शिशुनामा, शलो भोलिर्मरुप्रियः ॥१२५३॥
मयो महाङ्गो वासन्तो, द्विककुद्दुर्गलङ्घनः ।
भूतघ्न उष्ट्रो दाशेरो, रवणः कण्टकाशनः ॥१२५४॥
दीर्घग्रीवः केलिकीर्णः, करभस्तु त्रिहायणः ।
स तु शृङ्खलकः काष्ठमयैः स्यात्पादबन्धनैः ॥१२५५॥
गर्दभस्तु चिरमेही, वालेयो रासभः खरः ।
चक्रीवान् शङ्कुकर्णोऽथ, ऋषभो वृषभो वृषः ॥१२५६॥
वाडवेयः सौरभेयो, भद्रः शक्करशाक्करौ ।
उक्षाऽनड्वान् ककुद्मान् गौर्बलीवर्दश्च शाङ्करः ॥१२५७॥
उक्षा तु जातो जातोक्षः, स्कन्धिकः स्कन्धवाहकः ।
महोक्षः स्यादुक्षतरो, वृद्धोक्षस्तु जरद्गवः ॥१२५८॥
षण्डतोचित आर्षभ्यः, कूटो भग्नविषाणकः ।
इट्चरो गोपतिः षण्डो, गोवृषो मदकोहलः ॥१२५९॥
वत्सः शकृत्करिस्तर्णो, दम्यवत्सतरौ समौ ।
नस्योतो नस्तितः पष्ठवाट् तु स्याद्युगपार्श्वगः ॥१२६०॥
युगादीनान्तु वोढारो, युग्य-प्रासङ्ग्य-शाकटाः ।
स तु सर्वधुरीणः स्यात्, सर्वां वहति यो धुरम् ॥१२६१॥

एकधुरीणैकधुरावुभावेकधुरावहे ।
धुरीण धुर्य-धौरेय-धौरेयकं धुरन्धरौ ॥१२६२॥
धूर्वहेऽथ गलिर्दुष्टवृष शक्तोऽप्यवूर्वह ।
स्थौरी पृष्ठ्य पृष्ठवाहौ, द्विदन् षोडन् द्वि-षट्-रदौ १२६३॥
वहे स्कन्धोऽशकूट तु, ककुद नैचिक शिर ।
विषाण कूणिकौ शृङ्ग, सास्ना तु गलकम्बलः ॥१२६४॥
गौ सौरभेयी माहेयी, माहा सुरभिरर्जुना ।
उस्राऽघ्न्या रोहिणी शृङ्गिण्यनड्ड्ह्यनडुह्यपि ॥१२६५॥
तम्पा निलिम्पिका तम्बा, सा तु वर्णैरनेकधा ।
पृष्ठौही गर्भिणी वन्ध्या, वशा वेहद्गर्भोपघा ॥१२६६॥
अवतोका स्रवद्गर्भा, वृषाक्रान्ता तु सन्धिनी ।
प्रौढवत्सा बष्कयिणी, धेनुस्तु नवसूतिका ॥१२६७॥
परेष्टुर्बहुसूतिः स्याद्, गृष्टि सकृत्प्रसूतिका ।
प्रजने काल्योपसर्या, सुखदोह्या तु सुव्रता ॥१२६८॥
दु खदोह्या तु करटा, बहुदुग्धा तु वञ्जुला ।
द्रोणदुग्धा द्रोणदुघा, पीनोघ्नी पीवरस्तनी ॥१२६९॥
पीतदुग्धा तु धेनुष्या, संस्थिता दुग्धबन्धके ।
नैचिकी तूत्तमा गोषु, पलिक्नी बालगर्भिणी ॥१२७०॥

समांसमीना तु सा या, प्रतिवर्षं विजायते ।
स्यादचण्डी तु सुकरा, वत्सकामा तु वत्सला ॥१२७१॥
चतुस्त्रिर्हायणी द्व्येकहायन्येकादिवर्षिका ।
आपीनमूधो गोविट् तु, गोमयं भूमिलेपनम् ॥१२७२॥
तत्र शुष्के तु गोग्रन्थिः, करीषं-च्छगणे अपि ।
गवां सर्वं गव्यं व्रजे, गोकुलं गोधनं धनम् ॥१२७४॥
व्रजनं स्यादुपसरः, कीलः पुष्पलकः शिवः ।
बन्धनं दाम सन्दानं, पशुरज्जुस्तु दामनी ॥१२७४॥
अजः स्याच्छगलश्छागश्छगो बस्तः स्तभः पशुः ।
अजा तु छागिका मञ्जा, सर्वभक्षा गलस्तनी ॥१२७५॥
युवाऽजो बर्करोऽवौ तु, मेषोर्णायुर्हुडोरणाः ।
उरभ्रो मेण्ढको वृष्णिरेडको रोमशो हुडुः ॥१२७६॥
सम्फालः शृङ्गिणो भेडो, मेषी तु कुररी रुजा ।
जालकिन्यविलावेण्यथैडिकः शिशुवाहकः ॥१२७७॥
पृष्ठशृङ्गो वनाजः स्यादविदुग्धे त्ववेः परम् ।
सोढं दूसं मरीसं च, कुक्कुरो वक्रवालधिः ॥१२७८॥
अस्थिभुग्भषणः सारमेयः कौलेयकः शुनः ।
शुनिः श्वानो गृहमृगः, कुर्कुरो रात्रिजागरः ॥१२७९॥

रसनालिट् रतपराः कौलेयो यिर्नेणान्दुकौ ।
शालावृका मृगदंश, श्वाऽलर्कस्तु स रोगित ॥१२८०॥
विश्वकद्रुस्तु कुशलो, मृगव्ये सरमा शुनी ।
विट्चरः शूकरो ग्राम्ये, महिषो यमवाहनः ॥१२८१॥
रजस्वलो वाहरिपुर्लुलायो सैरिभो महः ।
धीरस्कन्धः कृष्णशृङ्गो, जरन्तो दंशभीरुकः ॥१२८२॥
रक्ताक्षः कासरो हंसकालीतनयलालिकौ ।
अरण्यजेऽस्मिन् गवलः, सिंहः कण्ठीरवो हरिः ॥१२८३॥
हर्यक्षः केसरीभारिः, पञ्चास्यो नखरायुधः ।
महानादः पञ्चशिखः, पारीन्द्रः पत्यरी मृगात् ॥१२८४॥
श्वेतपिङ्गोऽप्यथ व्याघ्रो, द्वीपी शार्दूलचित्रकौ ।
चित्रकायः पुण्डरीकस्तरक्षुस्तु मृगादनः ॥१२८५॥
शरभः कुञ्जरारातिरुत्पादकोऽष्टपादपि ।
गवयः स्याद्वनगवो, गोसदृक्षोऽथवारणः ॥१२८६॥
खड्गी वाध्रीणसः खड्गो, गण्डकोऽथ किरिः किटिः ।
भूदारः सूकरः कोलो, वराहः क्रोडपोत्रिणौ ॥१२८७॥
घोणी घृष्टिः स्तब्धरोमा, दंष्ट्री किट्योऽप्यलोद्धवौ ।
आखनिकः शिरोमर्मा, स्थूलनासो बहुप्रजः ॥१२८८॥

भाल्लूके भालूकर्क्षाच्छभल्लभल्लूकभल्लुकाः ।
शृगालो जम्बुकः फेरुः, फेरण्डः फेरवः शिवा ॥१२८९॥
घोरवासी भूरिमायो, गोमायुर्मृगधूर्त्तकः ।
हूरवो भरुजः क्रोष्टा, शिवाभेदेऽल्पके किखिः ॥१२९०॥
पृथौ गण्डिवलोपाकौ, कोकस्त्वीहामृगो वृकः ।
अरण्यश्वा मर्कटस्तु, कपिः कीशः प्लवङ्गमः ॥१२९१॥
प्लवङ्गः प्लवगः शाखामृगो हरिर्वलीमुखः ।
वनौका वानरोऽथासौ, गोलाङ्गूलोऽसितानन: ॥१२९२॥
मृगः कुरङ्गः सारङ्गो, वातायुर्हरिणावपि ।
मृगभेदा रुरुन्यङ्कुरङ्कुगोकर्णशम्बराः ॥१२९३॥
चमूरुचीनचमराः, समूरैणर्श्यरोहिषाः ।
कदली कन्दली कृष्णशारः पृषतरोहितौ ॥१२९४॥
दक्षिणेर्मा तु स मृगो, यो व्याधैर्दक्षिणे क्षतः ।
वातप्रमीर्वातमृगः, शशस्तु मृदुलोमकः ॥१२९५॥
शूलिको लोमकर्णोऽथ, शल्ये शललशल्यकौ ।
श्वाविच्च तच्छलाकायां, शललं शलमित्यपि ॥१२९६॥
गोधा निहाका गौधेरगौधारौ दुष्टतत्सुते ।
गौधेयोऽन्यत्र मुशली, गोधिकागोलिके गृहात् ॥१२९७॥

माणिक्या भित्तिका पल्ली, कुड्यमत्स्यो गृहोलिका ।
स्यादञ्जनाधिका हालिन्यञ्जनिका हलाहलः ॥१२९८॥

स्थूलाञ्जनाधिकायान्तु, ब्राह्मणी रक्तपुच्छिका ।
कृकलासस्तु सरटः, प्रतिसूर्यः शयानकः ॥१२९९॥

मूषिको मूषको वज्रदशनः खनकोन्दुरौ ।
उन्दुरुर्वृषः आखुश्च, सूच्यास्यो वृषलोचन ॥१३००॥

छुछुन्दरी गन्धमूषी, गिरिका बालमूषिका ।
बिडाल ओतुर्मार्जारो, हीकुश्च वृषदंशकः ॥१३०१॥

नाहको गात्रसङ्कोची, मण्डली नकुल पुन ।
पिङ्गलः सर्पहा बभ्रुः, सर्पोऽहिः पवनाशनः ॥१३०२॥

भोगी भुजङ्गभुजगौ भुजगो द्विजिह्वो
व्यालो भुजङ्गमसरीसृपदीर्घजिह्वाः ।
काकोदरो विषधरः फणभृत् पृदाकु
र्दर्वीकरकुण्डलिबिलेशयदन्दशूकाः ॥१३०३॥

दर्वीरे कञ्चुकिचक्रिगूढ-
पात्पन्नगौ जिह्मगलेलिहानौ ।
कुम्भीनसाऽऽशीविषदीर्घपृष्ठौ ,
स्याद्राजसर्पस्तु भुजङ्गभोजी ॥१३०४॥

चक्रमण्डल्य[1]जगरः[2], पारीन्द्रो[3] वाहसः[4] शयुः[5] ।
अलगर्दो[1] जलव्यालः[2], समौ राजिलदुन्दुभौ[3] ॥१३०५॥

भवेत्तिलित्सो[1] गोनासो[2], गोनसो[3] घोणसोऽपि[4] च ।
कुक्कुटाहिः[1] कुक्कुटाभो[2], वर्णेन च रवेण च ॥१३०६॥

नागाः[1] पुनः काद्रवेया[2]स्तेषां भोगावती पुरी ।
शेषो[1] नागाधिपो[2]ऽनन्तो[3], द्विसहस्राक्ष[4] आलुकः[5] ॥१३०७॥

स च श्यामोऽथवा शुक्लः, सितपङ्कजलाञ्छनः ।
वासुकि[1]स्तु सर्पराजः[2], श्वेतो नीलसरोजवान् ॥१३०८॥

तक्षकस्तु लोहिताङ्गः, स्वस्तिकाङ्कितमस्तकः ।
महापद्मस्त्वतिशुक्लो, दशबिन्दुकमस्तकः । ॥१३०९॥

शङ्खस्तु पीतो बिभ्राणो, रेखामिन्दुसितां गले ।
कुलिकोऽर्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः ॥१३१०॥

अथ कम्बला[1]श्वतर[2]धृतराष्ट्र[3]बलाहकाः[4] ।
इत्यादयोऽपरे नागास्तत्तत्कुलसमुद्भवाः ॥१३११॥

निर्मुक्तो[1] मुक्तनिर्मोकः[2], सविषा निर्विषाश्च ते ।
नागाः स्युर्दृग्विषा लूमविषास्तु वृश्चिकादयः ॥१३१२॥

व्याघ्रादयो लोमविषा, नखविषा नरादयः ।
लालाविषास्तु लूताद्याः, कालान्तरविषाः पुनः ॥१३१३॥

मूषिकाद्या दूषीविषं, स्ववीर्यमौषधादिभिः ।
कृत्रिमं तु विषं चौरं, गरश्चोपविषं च तत् ॥१३१४॥

भोगोऽहिकायो दंष्ट्राऽऽशी दर्वी भोगे फटे स्फुटे ।
फणोऽहिकोशे तु निर्व्वयनीनिर्मोककञ्चुकौ ॥१३१५॥

इति स्थलचराः ।

विहगो विहङ्गमखगौ पतगो विहङ्गः,
शकुनिः शकुन्तिशकुनौ विवयः शकुन्तौ ।
नभसङ्गमो विकिरपत्ररथौ विहायो–
द्विजपक्षिविष्किरपतत्रिपतत्पतङ्गौ ॥१३१६॥

पित्सन्नीडाण्डजोऽगौकौश्चञ्चुश्चञ्चूः सृपाटिका ।
त्रोटिश्च पत्रं पतत्रं, पिच्छं वाजस्तनूरुहम् ॥१३१७॥

पक्षो गरुच्छदश्चापि, पक्षमूलं तु पक्षतिः ।
प्रडीनोड्डीनसण्डीनडयनानि नभोगतौ ॥१३१८॥

पेशीकोशोऽण्डे कुलायो, नीडे केकी तु सर्पभुक् ।
मयूरबर्हिणौ नीलकण्ठो मेघसुहृच्छिखी ॥१३१९॥

शुक्लापाङ्गोऽस्य वाक् केका, पिच्छं बर्हं शिखण्डकः ।
प्रचलाकः कलापश्च, मेचकश्चन्द्रकः समौ ॥१३२०॥

वनप्रियः परभृतस्ताम्राक्षः कोकिलः पिकः ।
कलकण्ठः काकपुष्टः, काकोऽरिष्टः सकृत्प्रजः ॥१२२१॥
आत्मघोषश्चिरजीवी[५], घूकारिः करटो द्विकः ।
एकदृक् बलिभुक् ध्वाङ्क्षो, मौकुलिर्वायसोऽन्यभृत् ॥१२२२
वृद्धद्रोणद्रवकृष्णपर्वतेभ्यस्त्वसौ[५] परः ।
पवनाश्रयस्तु काकोलो, मद्गुस्तु जलवायसः ॥१२२३॥
घूके निशाटः काकारिः[३], कौशिकोलूकपेचकाः ।
दिवान्धोऽथ निशावेदी[१], कुक्कुटश्चरणायुधः ॥१२२४॥
कृकवाकुस्ताम्रचूडो[५], विवृताक्षः शिखण्डिकः ।
हंसाश्चक्राङ्गवक्राङ्गमानसौकः सितच्छदाः ॥१२२५॥
राजहंसास्त्वमी चञ्चुचरणैरतिलोहितैः ।
मल्लिकाक्षास्तु मलिनैर्धार्तराष्ट्राः सितेतरैः ॥१२२६॥
कादम्बास्तु कलहंसाः, पक्षैः स्युरतिधूसरैः ।
वारला वरला हंसी[३], वारटा वरटा च सा ॥१२२७॥
दार्वाघाटः शतपत्रः, खञ्जरीटस्तु खञ्जनः ।
सारसस्तु लक्ष्मणः स्यात्, पुष्कराख्यः कुरङ्करः ॥१२२८॥
सारसी लक्ष्मणाऽथ कुङ्, क्रौञ्चे चाषे किकीदिविः ।
चातकः स्तोकको बप्पीहः सारङ्गो नभोऽम्बुपः ॥१२२९॥

चक्रवाको रथाङ्गाह्वः, कोको द्वन्द्वचरोऽपि च ।
टिट्टिभस्तु कटुक्वाणः, उत्पादशयनश्च सः ॥१३३०॥
चटको गृहबलिभुक् कलविङ्कः कुलिङ्गकः ।
तस्य योषित्तु चटका, स्त्र्यपत्ये चटका तयोः ॥१३३१॥
पुमपत्ये चाटकैरो, दात्यूहे कालकण्टकः ।
जलरङ्कुर्जलरङ्गो, बके कह्वो बकोटवत् ॥१३३२॥
बलाहके स्याद्बलाको, बलाका बिसकण्ठिका ।
भृङ्गे कलिङ्गो धूम्याटः, कङ्कस्तु कमनच्छदः ॥१३३३॥
लोहपृष्ठो दीर्घपादः, कर्कटे स्कन्धमल्लकः ।
चिल्ले शकुनिरातापी, श्येने पत्री शशादनः ॥१३३४॥
दाक्षाय्यो दूरदृक् गृध्रोऽथोत्क्रोशो मत्स्यनाशनः ।
कुररः कीरस्तु शुको, रक्ततुण्डः फलादनः ॥१३३५॥
शारिका तु पीतपादा, गोराटी गोकिराटिका ।
स्याच्चर्मचटकाया तु, जतुकाऽजिनपत्रिका ॥१३३६॥
वल्गुलिका मुखविष्ठा, परोष्णी तैलपायिका ।
कर्करेटुः करेटुः स्यात्, करटुः कर्कराटुकः ॥१३३७॥
आटिरिति शराटिः स्यात्, कृष्णैकारौ समौ ।
भासे शकुन्ते कोयष्टौ, शिखी चलकुक्कुभे ॥१३३८॥

पारावतः कलरवः, कपोतो[3] रक्तलोचनः ।
ज्योत्स्नाप्रियो[1] वल्गुचञ्चुश्चकोरो[3] विषसूचकः[4] ॥१३३९॥
जीवंजीवस्तु गुन्द्रालो, विषदर्शनमृत्युकः[3] ।
व्याघ्राटस्तु[1] भरद्वाजः, प्लवस्तु[1] गात्रसम्प्लवः ॥१३४०॥
तित्तिरिस्तु खरकोणो[2], हारीतस्तु मृदङ्गुरः[2] ।
कारण्डवस्तु मरलः[1], सुगृहश्चञ्चुसूचिकः[2] ॥१३४१॥
कुम्भकारकुक्कुटस्तु[1], कुक्कुभः कुहकस्वनः[3] ।
पक्षिणा येन गृह्यन्ते, पक्षिणोऽन्ये स दीपकः[1] ॥१३४२॥
छेकाः[2] गृह्यास्ते गेहासक्ता ये मृगपक्षिणः ।

इति खचराः पञ्चेन्द्रियाः ।

मत्स्यो[1] मीनः पृथुरोमा[3], झषो[4] वैसारिणोऽण्डजः[6] ॥१३४३॥
सङ्घचारी[7] स्थिरजिह्व[8], आत्माशी[9] स्वकुलक्षयः[10] ।
विसारः[11] शकली[12] शल्की[13], शम्बरोऽनिमिषस्तिमिः[16] १३४४
सहस्रदंष्ट्रे[1] वादालः, पाठीने[1] चित्रवल्लिकः[2] ।
शकुले[1] स्यात्फलकोऽथ, गडकः शकुलार्भकः[2] ॥१३४५॥
उलूपी[1] शिशुके[2] प्रोष्ठी[1], शफरः[2] श्वेतकोलके[3] ।
नलमीनश्चिलिचिमो[2], मत्स्यराजस्तु रोहितः[1] ॥१३४६॥

मद्गुरस्तु राजशृङ्गे, शृङ्गी तु मद्गुरप्रिया ।
क्षुद्राण्डमत्स्यजातं तु, पोताधानं जलाणुकम् ॥१३४७॥
महामत्स्यास्तु चीरिलितिमितिमिङ्गिलगिलादयः ।
अथ यादांसि नक्राद्या, हिंसका जलजन्तवः ॥१३४८॥
नक्रे कुम्भीरः आलास्यः, कुम्भी महामुखोऽपि च ।
तालुजिह्वः शङ्खमुखो, गोमुखो जलसूकरे ॥१३४९॥
शिशुमारस्त्वम्बुकूर्मः, उष्णवीर्यो महावसः ।
उद्रस्तु जलमार्जारः, पानीयनकुलो वसी ॥१३५०॥
ग्राहे तन्तुस्तन्तुनागोऽवहारो नागतन्तुणौ ।
अन्येऽपि यादोभेदाः स्युर्बहवो मकरादयः ॥१३५१॥
कुलीरः कर्कटे पिङ्गचक्षुः पार्श्वोदरप्रियः ।
द्विधागतिः षोडशाङ्घ्रिः, क्रूरचिह्नो बहिश्चरः ॥१३५२॥
कच्छपे कमठे कूर्मः, क्रोडपादश्चतुर्गतिः ।
पञ्चाङ्गगुप्तदौलेयौ, जीवथः कच्छपी डुली ॥१३५३॥
मण्डूकः हरिशालूरप्लवभेकप्लवङ्गमाः ।
वर्षाभूः प्लवगः शालुरजिह्वव्यङ्गदर्दुराः ॥१३५४॥
स्थले नरादयो ये तु, ते जले जलपूर्वकाः ।
अण्डजाः पक्षिसर्पाद्याः, पोतजाः कुञ्जरादयः ॥१३५५॥

रसजा मद्यकीटाद्या, नृगवाद्या जरायुजाः ।
यूकाद्याः स्वेदजा मत्स्यादयः सम्मूर्च्छनोद्भवाः ॥१३५६॥
खञ्जनास्तूद्भिदोऽथोपपादुका देवनारकाः ।
त्रसयोनय इत्यष्टावुद्भिदुद्भिज्जमुद्भिजम् ॥१३५७॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां तिर्यक्काण्डश्चतुर्थः ॥ ४ ॥

## अथ नरककाण्डः

स्युर्नारकास्तु परेतप्रेतयात्यातिवाहिकाः ।
आजुर्विष्टिर्यातना तु, कारणा तीव्रवेदना ॥१३५८॥
नरकस्तु नारकः स्यान्निरयो दुर्गतिश्च सः ।
घनोदधिघनवाततनुवातनभःस्थिताः ॥१३५९॥
रत्नशर्करावालुकापङ्कधूमतमःप्रभाः ।
महातमःप्रभा चेत्यधोऽधो नरकभूमयः ॥१३६०॥
क्रमात्पृथुतराः सप्ताथ त्रिंशत्पञ्चविंशतिः ।
पञ्चदश दश त्रीणि, लक्षाण्यूनं च पञ्चभिः ॥१३६१॥
लक्षं पञ्च च नरकावासाः सीमन्तकादयः ।
एतासु स्युः क्रमेणाथ, पातालं वडवामुखम् ॥१३६२॥

मनसः कर्म सङ्कल्पः, स्यादथो शर्म[1] निर्वृतिः[2] ।
सातं[3] सौख्यं[4] सुखं[5] दुःखं[1], त्वसुखं[2] वेदना[3] व्यथा[4] ॥१३७०॥
पीडा[5] बाधा[6]ऽर्ति[7]राभीलं[8], कृच्छ्रं[9] कष्टं[10] प्रसूतिजम्[11] ।
आमनस्यं[12] प्रगाढं[13] च, स्यादाधि[1]र्मानसी व्यथा ॥१३७१॥
सपत्राकृति[1]-निष्पत्राकृती[2] त्वत्यन्तपीडने ।
क्षुज्जाठराग्निजा पीडा, व्यापादो[1] द्रोहचिन्तनम् ॥१३७२॥
उपज्ञा ज्ञानमाद्यं स्याच्चर्चा[1] सङ्ख्या[2] विचारणा[3] ।
वासना[1] भावना[2] संस्कारो[3]ऽनुभूताद्यविस्मृतिः ॥१३७३॥
निर्णयो[1] निश्चयो[2]ऽन्तः[3] सम्प्रधारणा[4] समर्थनम्[5] ।
अविद्या[1]ऽहम्मति[2]रज्ञानं[3], भ्रान्ति[1]र्मिथ्यामति[2]र्भ्रमः[3] ॥१३७४॥
सन्देह[1]द्वापरो[2]ऽऽरेका[3], विचिकित्सा[4] च संशयः[5] ।
परभागो[1] गुणोत्कर्षो[2], दोषे[1] त्वादीनवा[2]श्रवौ[3] ॥१३७५॥
स्याद् रूपं[1] लक्षणं[2] भावश्चा[3]त्मा[4]प्रकृति[5]रीतयः[6] ।
सहजो[7] रूपतत्त्वं[8] च, धर्म[9]सर्गौ[10] निसर्गवत्[11] ॥१३७६॥
शीलं[12] सतत्त्वं[13] संसिद्धि[14]रवस्था[1] तु दशा[2] स्थितिः[3] ।
स्नेहः[1] प्रीतिः[2] प्रेम[3] हार्दं[4], दाक्षिण्यं[1] त्वनुकूलता[2] ॥१३७७॥
विप्रतिसारो[1]ऽनुशयः[2], पश्चात्तापो[3]ऽनुतापश्च[4] ।
अवधान[1]समाधान[2]प्रणिधानानि[3] तु समाधयः[4] स्युः ॥१३७८

धर्मः पुण्यं वृषः श्रेयः सुकृतं नियतिर्विधिः ।
दैवं भाग्यं भागधेयं, दिष्टं चायस्तु तच्छुभम् ॥१३७९॥
अलक्ष्मीर्निर्ऋतिः कालकर्णिका स्यादथाशुभम् ।
दुष्कृतं दुरितं पापमेनः पाप्मा च पातकम् ॥१३८०॥
किल्बिषं कलुषं किण्वं, कल्मषं वृजिनं तमः ।
अंहः कल्कममघं पङ्कं, उपाधिर्धर्मचिन्तनम् ॥ १३८१ ॥
त्रिवर्गो धर्मकामार्थाश्चतुर्वर्गः समोक्षकाः ।
बलसुवर्णाश्चतुर्भद्रं, प्रमादोऽनवधानता ॥१३८२॥
छन्दोऽभिप्राय आकूतं, मतभावाशया अपि ।
हृषीकमक्षं करणं, स्रोतः खं विषयीन्द्रियम् ॥१३८३॥
बुद्धीन्द्रियं स्पर्शनादि, पाण्यादि तु क्रियेन्द्रियम् ।
स्पर्शादयस्त्विन्द्रियार्था, विषया गोचरा अपि ॥१३८४॥
शीतं तुषारं शिशिरं, सुशीमं शीतलं जडम् ।
हिमोऽथोष्णे तिग्मस्तीव्रस्तीक्ष्णश्चण्डः खरः पटुः ॥१३८५
कोष्णं कवोष्णं कदुष्णं, मन्दोष्णं चेषदुष्णवत् ।
निष्ठुरः कक्खटः क्रूरः, परुषः कर्कशः खरः ॥१३८६॥
दृढः कठोरः कठिनो, जरठः कोमलं पुनः ।
मृदुलं मृदु सोमालं सुकुमारमकर्कशम् ॥१३८७॥

मधुरस्तु[1] रसज्येष्ठो[2], गुल्यः[3] स्वादुर्[4]मधूलकः[5] ।
अम्लस्तु[1] पाचनो[2] दन्तशठो[3]ऽथ लवणः[1] सरः[2] ॥१३८८॥
सर्वरसो[3]ऽथ कटुः[1] स्याद्दोषणो[2] मुखशोधनः[3] ।
वक्त्रभेदी[1] तु तिक्तो[2]ऽथ, कषायस्तु[1]वरो[2] रसः ॥१३८९॥
गन्धो[1] जनमनोहारी[2], सुरभिर्[1]घ्राणतर्पणः[2] ।
समाकर्षी[3] निर्हारी[4] च, स आमोदो[1] विदूरगः[2] ॥१३९०॥
विमर्दोत्थः परिमलो[1]ऽथामोदी[1] मुखवासनः[2] ।
इष्टगन्धः[3] सुगन्धिश्च[4], दुर्गन्धः[1] पूतिगन्धिकः[2] ॥१३९१॥
आमगन्धि तु विस्रं[2] स्याद्वर्णाः[1] श्वेतादिका अमी ।
श्वेतः[1] श्येतः[2] सितः[3] शुक्लो[4], हरिणो[5] विशदः[6] शुचिः[7] १३९२
अवदात[8]गौर[9]शुभ्र[10]वलक्ष[11]धवलो[12]ऽर्जुनाः[13] ।
पाण्डुरः[14] पाण्डरः[15] पाण्डुर्[16]ईषत्पाण्डुस्तु[1] धूसरः[2] ॥१३९३॥
कापोतस्तु[1] कपोताभः[2], पीतस्तु[1] सितरञ्जनः[2] ।
हारिद्रः[3] पीतलो[4] गौरः[5], पीतनीलः[1] पुनर्हरित्[2] ॥१३९४॥
पालाशो[3] हरितस्[4]तालकाभो[5] रक्तस्तु[1] रोहितः[2] ।
माञ्जिष्ठो[3] लोहितः[4] शोणः[5], श्वेतरक्तस्तु[1] पाटलः[2] ॥१३९५॥
अरुणो[1] बालसन्ध्याभः[2], पीतरक्तस्तु[1] पिञ्जरः[2] ।
कपिलः[3] पिङ्गलः[4] श्यावः[5], पिशङ्गः[6] कपिशो[7] हरिः[8] १३९६

बभ्रुः कद्रुः कडारश्च, पिङ्गः कृष्णस्तु मेचकः ।
स्याद्रामः श्यामलः श्यामः, कालो नीलोऽसितः शितिः
॥१३९७॥

रक्तश्यामे पुनर्धूम्रधूमलावथ कर्बुरः ।
किर्मीर एतः शबलश्चित्रः कल्माषचित्रलौ ॥१३९८॥

शब्दो निनादो निर्घोषः स्वानो ध्वानः स्वरो ध्वनिः ।
निर्ह्रादो निनदो ह्रादो, निस्वानो निस्वनः स्वनः १३९९
रवो नादः स्वनिर्घोषः, सम्याक्रम्यो राव आरवः ।
क्वणनं निक्वणः क्वाणो, निक्वाणश्च क्वणो रणः १४००
षड्जर्षभगान्धाराः, मध्यमः पञ्चमस्तथा ।
धैवतो निषधः सप्त, तन्त्रीकण्ठोद्भवाः स्वराः ॥१४०१॥
ते मन्द्रमध्यताराः स्युरुरःकण्ठशिरोद्भवाः ।
रुदितं क्रन्दितं क्रुष्टं, तदपूर्णं तु गद्गदं ॥१४०२॥
शब्दो गुणानुरागोत्थः, प्रणादः सीत्कृतं नृणाम् ।
पर्दनं गुदजे शब्दे, कर्दनं कुक्षिसम्भवे ॥१४०३॥
क्ष्वेडो तु सिंहनादोऽथ, तन्दनं सुभटध्वनिः ।
कोलाहलः कलकलस्तुमुलो व्याकुलो रवः ॥१४०४॥

मर्मरो[1] वस्त्रपर्णादेर्भूषणानां तु शिञ्जितम्[1] ।
हेषा[1] ह्रेषा[2] तुरंगाणां, गजानां गर्ज[1]बृंहिते[2] ॥१४०५॥
विस्फारो[1] धनुषां हम्भा[1]रम्भे[2] गोर्जलदस्य तु ।
स्तनितं[1] गर्जितं[2] गर्जिः[3], स्वनितं[4] रसितादि च ॥१४०६॥
कूजितं[1] स्याद्विहङ्गानां, तिरश्चां रुत[1]वासिते[2] ।
वृषस्य रेषणं[1] रेषा[2], बुक्कनं[1] भषणं[2] शुनः ॥१४०७॥
पीडितानां तु कणितं[1], मणितं[1] रतिकूजितम् ।
प्रक्वाणः[1] प्रक्वण[2]स्तन्त्र्या, मर्दलस्य तु गुन्दलः ॥१४०८॥
क्षीजनं[1] तु कीचकानां, भेर्या नादस्तु दर्दुरः[1] ।
तारोऽत्युच्चैर्ध्वनिर्मन्द्रो[1], गम्भीरो मधुरः कलः ॥१४०९॥
काकली[1] तु कलः सूक्ष्म, एकतालो[1] लयानुगः ।
काकुर्ध्वनिविकारः[1] स्यात्प्रतिश्रुत्तु[1] प्रतिध्वनिः[2] ॥१४१०॥
सङ्घाते[1] प्रकर[2]ौघ[3]वार[4]निकर[5]व्यूहाः[6] समूह[7]श्चयः[8],
सन्दोहः[9] समुदाय[10]राशि[11]विसर[12]व्राताः[13] कलापो[14] व्रजः[15] ।
कूटं[16] मण्डल[17]चक्रवाल[18]पटल[19]स्तोमा[20] गणाः[21] पेटकं[22],
वृन्दं[23] चक्र[24]कदम्बके[25] समुदयः[26] पुञ्ज[27]ोत्करौ[28] संहतिः[29]
॥१४११॥

समवायो[30] निकुरम्बं[31], जाल[32] निवहसञ्चयौ[33][34] ।
जात[35] तिरश्चां तद्यूथ, सङ्घसार्थौ तु देहिनाम् ॥१४१२॥
कुलं तेषां सजातीनां, निकायस्तु सधर्मिणाम् ।
वर्गस्तु सदृशां स्कन्धो, नरकुञ्जरवाजिनाम् ॥१४१३॥
ग्रामो विषयशब्दाद्यभूतेन्द्रियगणाद् व्रजे ।
समजस्तु पशूनां स्यात्समाजस्त्वन्यदेहिनाम् ॥१४१४॥
शुकादीनां गणे शौकमायूरतैत्तिरादय ।
भिक्षादेर्भैक्षमाहल्लैगार्भिणयौवतादय ॥१४१५॥
गोत्रार्थप्रत्ययान्तानां, स्युरौपगवकादय ।
उक्षादेरौक्षक मानुष्यकं वार्द्धकमौष्ट्रकम् ॥१४१६॥
स्याद्राजपुत्रकं राजन्यकं राजकमात्मजे ।
वात्सकौरभ्रके कावचिकं कवचिनामपि ॥१४१७॥
हास्तिकं तु हस्तिनां स्यादापूपिकाद्यचेतसाम् ।
धेनूनां धैनुकं धैन्वन्तानां गौधेनुकादय ॥१४१८॥
केदारकं कैदारिकं, कैदार्यमपि तद्गणे ।
ब्रह्मणानां ब्राह्मण्य, माणव्यं वाडव्यमित्यपि ॥१४१९॥
गणिकानां तु गाणिक्य, करभाणां कैरभकैशिके ।
अश्वानामाश्वमश्वीयं, पशूनां पार्श्वमेव्यय ॥१४२०॥

व तूलं वात्ये वातानां, गव्यागोत्रे पुनर्गवाम् ।
पाश्यागल्यादि पाशादेः, खलादेः खलिनीनिभाः॥१४२१॥
जनता बन्धुता ग्रामता गजता सहायता ।
जनादीनां रथानां तु, स्याद्रथ्या रथकव्यया ॥१४२२॥
राजिर्लेखा ततिर्वीथी, मालाल्यावलिपङ्क्तयः ।
धोरणी श्रेण्युभौ तु द्वौ, युगलं द्वितयं द्वयम् ॥१४२३॥
युगं द्वैतं यमं द्वन्द्वं, युग्मं यमलयामले ।
पशुभ्यो गोयुगं युग्मे, परं षट्त्वे तु षड्गवम् ॥१४२४॥
परःशताद्यास्ते येषां, परा सङ्ख्या शतादिकात् ।
प्राज्यं प्रभूतं प्रचुरं, बहुलं बहु पुष्कलम् ॥१४२५॥
भूयिष्ठं पुरुहं भूयो, भूर्यदभ्रं पुरु स्फिरम् ।
स्तोकं क्षुल्लं तुच्छमल्पं, दभ्राणुतलिनानि च ॥१४२६॥
तनु क्षुद्रं कृशं सूक्ष्मं, पुनः श्लक्ष्णं च पेलवम् ।
त्रुटौ मात्रा लवो लेशः, कणो ह्रस्वं पुनर्लघु ॥१४२७॥
अत्यल्पेऽल्पिष्ठमल्पीयः, कनीयोऽणीय इत्यपि ।
दीर्घायते समे तुङ्गमुच्चमुन्नतमुद्धुरम् ॥१४२८॥
प्रांशूच्छ्रितमुदग्रं च, न्यग् नीचं ह्रस्वमन्थरे ।
खर्वं कुब्जं वामनं च, विशालं तु विशङ्कटम् ॥१४२९॥

पृथूरु पृथुल स्थूल, विकट पिपुल बृहत् ।
स्फार वरिष्ठ विस्तीर्ण, तत बहु महद् गुरु ॥१४३०॥
दैर्घ्यमायाम आनाह, आरोहस्तु समुच्छ्रयः ।
उत्सेध उदयोच्छ्रायौ, परिणाहो विशालता ॥१४३१॥
प्रपञ्चाभोगविस्तारव्यासा, शब्दे स विस्तरः ।
समासस्तु समाहारः, संक्षेपः संग्रहोऽपि च ॥१४३२॥
सर्व समस्तमन्यून, समग्र सकल समम् ।
विश्वाशेषाखण्डकृत्स्नान्यक्षाणि निखिलाखिले ॥१४३३॥
खण्डेऽर्द्धशकले भित्त, नेमशकलदलानि च ।
अंशो भागश्च वण्टः स्यात्, पादस्तु स तुरीयकः १४३४
मलिन कच्चर म्लान, कश्मल च मलीमसम् ।
पवित्र पावन पूत, पुण्य मेध्यमथोज्ज्वलम् ॥१४३५॥
विमल विशद वीध्रमवदातमनाविलम् ।
विशुद्ध शुचि चोक्ष तु, निःशोध्यमनवस्करम् ॥१४३६॥
निर्णिक्त शोधित मृष्ट, धौत क्षालितमित्यपि ।
सम्मुखीनमभिमुख, पराचीन पराङ्मुखम् ॥१४३७॥
मुख्य प्रकृष्ट प्रमुख प्रबर्ह, वर्य वरेण्य प्रवर पुरोगम् ।
अनुत्तर प्राग्रहर प्रवेक, प्रधानमग्र्यसरमुत्तमाग्रम् ॥१४३८॥

ग्रामणीरग्रण्यग्रिमजात्याग्र्यानुत्तमान्यनवरार्द्ध्यवरे ।
प्रष्ठपरार्द्ध्याग्राणि श्रेयसि
तु श्रेष्ठसत्तमे पुष्कलवत् ॥१४३९॥

स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्यास्तल्लजश्च मतल्लिका ॥१४४०॥

मचर्चिका प्रकाण्डो द्वौ, प्रशस्यार्थप्रकाशकाः ।
गुणोपसर्जनोपाग्राण्यप्रधानेऽवमं पुनः ॥१४४१॥

निकृष्टमणकं गर्ह्यमवद्यं काण्डकुत्सिते ।
अपकृष्टं प्रतिकृष्टं, याप्यं रेफोऽधमं ब्रुवम् ॥१४४२॥

खेटं पापमपशदं, कुपूयं चेलमर्वं च ।
तदासेचनकं यस्य, दर्शनाद्दृग् न तृप्यति ॥१४४३॥

चारु हारि रुचिरं मनोहरं,
वल्गु कान्तमभिरामबन्धुरे ।
वामरुच्यसुषमाणि शोभनं,
मञ्जु मञ्जुलमनोरमाणि च ॥१४४४॥

साधुरम्यमनोज्ञानि, पेशलं हृद्यसुन्दरे ।
काम्यं कम्रं कमनीयं, सौम्यं च मधुरं प्रियम् ॥१४४५॥

व्युष्टिः फलमसारं तु, फल्गु शून्यं तु रिक्तकम् ।
शून्यं तुच्छं वशिकं च, निविडं तु निरन्तरम् ॥१४४६॥

निबिरीसं घनं सान्द्रं, नीरन्ध्रं बहलं दृढम् ।
गाढमविरलं चाथ, विरलं तनु पेलवम् ॥१४४७॥

नवं नवीनं सद्यस्कं, प्रत्यग्रं नूत्ननूतने ।
नव्यं चाभिनवं जीर्णे, पुरातनं चिरन्तनम् ॥१४४८॥

पुराणं प्रतनं प्रत्नं, अथ मूर्तं तु मूर्तिमत् ।
उच्चावचं नैकभेदमतिरिक्तोऽधिके भृशे ॥१४४९॥

पार्श्वं समीपं सविधं समर्या-
भ्याशं सवेशान्तिकसन्निकर्षाः ।
सदेशमभ्यग्रमनीडसंनि-
धानोन्युपान्तं निकटोपकण्ठे ॥१४५०॥

सन्निकृष्टसमर्यादाभ्यर्णाभ्यासन्नसंनिधी ।
अव्यवहितेऽनन्तरं, संसक्तमपटान्तरम् ॥१४५१॥

नेदिष्ठमन्तिकतमं, विप्रकृष्टपरे पुनः ।
दूरेऽतिदूरे दविष्ठं, दवीयोऽथ समातनम् ॥१४५२॥

शाश्वतोऽनश्वरे नित्यं, ध्रुवं स्थेयस्त्वतिस्थिरम् ।
स्थास्नु स्थेष्ठं तत्कूटस्थं, कालव्याप्येकरूपतः ॥१४९३॥
स्थावरन्तु जङ्गमान्यजङ्गमं तु त्रसं चरम् ।
चराचरं जगदिङ्गं, चरिष्णु चाथ चञ्चलम् ॥१४९४॥
तरलं कम्पनं कम्प्रं, परिप्लवं चलाचले ।
चटुलं चपलं लोलं, चलं पारिप्लवास्थिरे ॥१४९५॥
ऋजावजिह्मप्रगुणावलोऽग्रेऽवनतानते ।
कुञ्चितं नतमाविद्धं, कुटिलं वक्रवेल्लिते ॥१४९६॥
वृजिनं भङ्गुरं भुग्नमरालं जिह्ममूर्मिमत् ।
अनुगेऽनुपदान्वक्षान्वञ्चैकाक्येकके एककः ॥१४९७॥
एकात्तानायनैसर्गाग्र्याण्यैकाग्र्यं च तद्गतम् ।
अनन्यवृत्त्येकायनगतं चाथाद्यमादिमम् ॥१४९८॥
पौरस्त्यं प्रथमं पूर्वमादिरग्रमथान्तिमम् ।
जघन्यमन्त्यं चरममन्तः पाश्चात्यपश्चिमे ॥१४९९॥
मध्यमं माध्यमं मध्यमीयं माध्यन्दिनं च तत् ।
अभ्यन्तरमन्तरालं, विचाले मध्यमन्तरे ॥१४६०॥
तुल्यः समानः सदृक्षः, सरूपः सदृशः समः ।
साधारणसधर्माणौ, सवर्णः सन्निभः सदृक् ॥१४६१॥

स्युरुत्तरपदे प्रख्यः, प्रकारः प्रतिमो निभः ।
भूतरूपोपमाः काशः, सं-नी-प्र-प्रति-तः परः ॥१४६२॥
औपम्यमनुकारोऽनुहारः साम्यं तुलोपमा ।
कक्षोपमाऽर्चा तु, प्रतिमा यातना निधिः ॥१४६३॥
छाया छन्दः कायो रूपं, बिम्बं मानं कृती अपि ।
सूर्मी स्थूणाऽय प्रतिमा, हरिणी स्याद्धिरण्मयी ॥१४६४॥
प्रतिकूलन्तु विलोममपसव्यमपष्ठुरम् ।
वामं प्रसव्यं प्रतीपं, प्रतिलोममपष्ठु च ॥१४६५॥
वामं शरीरेऽङ्गे सव्यमपसव्यन्तु दक्षिणम् ।
अबाधोच्छृङ्खलोद्दामान्ययन्त्रितमनर्गलम् ॥१४६६॥
निरङ्कुशं स्फुटं स्पष्टं, प्रकाशं प्रकटोल्बणे ।
व्यक्तं वर्तुलं तु वृत्तं, निस्तलं परिमण्डलम् ॥१४६७॥
बन्धुरं तून्नतानतं, स्पष्टं विषमोन्नतम् ।
अन्यदन्यतरद्भिन्नं, त्वमेकमितरच्च तत् ॥१४६८॥
करम्बः कर्बुरो मिश्रः, सम्पृक्तः खचितः समाः ।
विविधस्तु बहुविधो, नानारूपः पृथग्विधः ॥१४६९॥
त्वरितं सत्वरं तूर्णं, शीघ्रं क्षिप्रं द्रुतं लघु ।
चपलाविलम्बितं च, झम्पा सम्पातपाटवम् ॥१४७०॥

अनारतं त्वविरतं, संसक्तं सततानिशे ।
नित्यानवरताजस्रासक्ताश्रान्तानि सन्ततम् ॥१४७१॥

साधारणं तु सामान्यं, दृढसन्धि तु संहतम् ।
कलिलं गहनं सङ्कीर्णं तु सङ्कुलमाकुलम् ॥१४७२॥

कीर्णमाकीर्णं च पूर्णं, त्वाचितं छन्नपूरिते ।
भरितं निचितं व्याप्तं, प्रत्याख्यातं निराकृतम् ॥१४७३॥

प्रत्यादिष्टं प्रतिक्षिप्तमपविद्धं निरस्तवत् ।
परिक्षिप्तं वलयितं, निवृत्तं परिवेष्टितम् ॥१४७४॥

परिष्कृतं परीतं च, त्यक्तं तूत्सृष्टमुज्झितम् ।
धूतं हीनं विधूतं च, विन्नं वित्तं विचारिते ॥१४७५॥

अवकीर्णं त्ववध्वस्तं, संवीते रुद्धमावृतम् ।
संवृतं पिहितं छन्नं, स्थगितं चापवारितम् ॥१४७६॥

अन्तर्हितं तिरोहितमन्तर्द्धिस्त्वपवारणम् ।
छदनं व्यवधाऽन्तर्द्धापिधानं स्थगनानि च ॥१४७७॥

व्यवधानं तिरोधानं, दर्शितं तु प्रकाशितम् ।
आविष्कृतं प्रकटितमुच्चण्डं त्ववलम्बितम् ॥१४७८॥

अनादृतमवज्ञातं, मानितं गणितं मतम् ।
रीढोऽवज्ञोऽवहेलोऽन्यसूर्क्षणं चाप्यनादरे ॥१४७९॥
उन्मूलितमावर्हितं, स्यादुत्पाटितमुद्धृतम् ।
प्रेङ्खोलितं तरलितं, लुलितं प्रेङ्खितं धुतम् ॥१४८०॥
चलितं कम्पितं धूतं, वेल्लितान्दोलिते अपि ।
दोला प्रेङ्खोलनं प्रेङ्खा, फाण्टं कृतमयत्नतः ॥१४८१॥
अथ क्षिप्तं न्यञ्चितं स्यादूर्द्धक्षिप्तमुदञ्चितम् ।
नुन्ननुत्तास्तनिष्ठ्यूतान्याविद्धं क्षिप्तमीरितम् ॥१४८२॥
समे दिग्धलिप्ते स्नातमुग्ने रूषितगुण्ठिते ।
गूढगुप्ते च गुपितमूपितं गुणिताहते ॥१४८३॥
स्यान्निशातं शितं शातं, निशितं तेजितं क्ष्णुतम् ।
वृत्ते तु वृत्तवावृत्तौ, ह्रीतह्रीणौ तु लज्जिते ॥१४८४॥
सन्नद्धे स्यात्सङ्कलितं, संयोगिते उपाहिते ।
पक्वे परिणतं पाके, क्षीराज्यहविषां शृतम् ॥१४८५॥
निष्पक्वे क्वथितं प्लुष्टे प्रुष्टदग्धोपितौ समाः ।
तनूकृते त्वष्टतष्टौ, विद्धे छिद्रितवेधितौ ॥१४८६॥

सिद्धे निर्वृत्तनिष्पन्नौ, विलीने द्रुतविद्रुतौ ।
उतं प्रोतं स्यूतमूतमुतं च तन्तुसन्तते ॥१४८७॥
पाटितं दारितं भिन्ने, विदरः स्फुटनं भिदा ।
अङ्गीकृतं प्रतिज्ञातमूरीकृतोररीकृते ॥१४८८॥
संश्रुतमभ्युपगतमुररीकृतमाश्रुतम् ।
सङ्कीर्णं प्रतिश्रुतं च, छिन्ने लूनं छितं दितम् ॥१४८९॥
छेदितं खण्डितं वृक्णं, कृत्तं प्राप्तं तु भावितम् ।
लब्धमासादितं भूतं, पतिते गलितं च्युतम् ॥१४९०॥
स्रस्तं भ्रष्टं स्कन्नपन्ने, संशितं तु सुनिश्चितम् ।
मृगितं मार्गितान्विष्टान्वेषितानि गवेषिते ॥१४९१॥
तिमिते स्तिमितक्लिन्नसार्द्रार्द्रोन्नाः समुन्नवत् ।
प्रस्थापितं प्रतिशिष्टं, प्रहितप्रेषिते अपि ॥१४९२॥
ख्याते प्रतीतप्रज्ञातवित्तप्रथितविश्रुताः ।
तप्ते सन्तापितो दूनो, धूपायितश्च धूपितः ॥१४९३॥
शीने स्त्यानमुपनतस्तूपसन्ने उपस्थितः ।
निर्वातस्तु गते वाते, निर्वाणः पावकादिषु ॥१४९४॥

प्रवृद्धमेधितं प्रौढं, विस्मृतोऽन्तर्गते समे ।
उद्वान्तमुद्गते गूनं, हन्ने मीढं तु मूत्रिते ॥१४९५॥
विदितं बुधितं बुद्धं, ज्ञातं सितं गतमवगतम् ।
मनितं प्रतिपन्नं च, स्यन्नं रीणं स्रुतं स्रुतम् ॥१४९६॥
गुप्तेगोपायितत्रातावितत्राणानि रक्षिते ।
कर्म क्रिया विधा हेतुशून्या त्वास्या विलक्षणम् ॥१४९७
कार्मणं मूलकर्मापि, सम्वननं वशक्रिया ।
प्रतिबन्धे प्रतिष्टम्भः, स्यादास्याऽऽस्थाऽऽसना स्थिति ॥
परस्परं स्यादन्योऽन्यमितरेतरमित्यपि ।
आवेशाटोपौ संरम्भे, निवेशो रचना स्थितौ ॥१४९९॥
निर्भेदोऽभिनिवेशो स्यात्प्रवेशोऽन्तर्विगाहनम् ।
गमो यात्रा विहारेर्यापथौ विसर्पपरिक्रमाः ॥१५००॥
अन्योऽन्याज्ञा पर्यटनं, चर्या त्वीर्यापथस्थिति ।
व्यत्यासस्तु विपर्यासो, वैपरीत्यं विपर्ययः ॥१५०१॥
व्यत्ययेऽप स्फातिर्वृद्धौ, प्रीणनेऽवनतर्पणे ।
परित्राणं तु पर्याप्तिर्हस्तवारणमित्यपि ॥१५०२॥
प्रणति प्रणिपातोऽनुनयेऽथ च्यवनं क्रमात् ।
विनाशे उपशायं, पर्यायोऽनुक्रमे क्रमः ॥१५०३॥

परिपाट्यानुपूर्व्यावृदतिपातस्त्वतिक्रमः ।
उपात्ययः पर्ययश्च, समौ सम्बाधसङ्कटौ ॥१५०४॥

कामं प्रकामं पर्याप्तं, निकामेष्टं यथेप्सितम् ।
अत्यर्थं गाढमुद्गाढं, बाढं तीव्रं भृशं दृढम् ॥१५०५॥

अतिमात्रातिमर्यादनितान्तोत्कर्षनिर्भराः ।
भरैकान्तातिवेलातिशया जृम्भा तु जृम्भणम् ॥१५०६॥

आलिङ्गनं परिष्वङ्गः, संश्लेष उपगूहनम् ।
अङ्कपाली परीरम्भः, क्रोडीकृतिरथोत्सवे ॥१५०७॥

महः क्षणोद्धवोद्धर्षा, मेलके सङ्गसङ्गमौ ।
अनुग्रहोऽभ्युपपत्तिः, समौ निरोधनिग्रहौ ॥१५०८॥

विघ्नोऽन्तरायप्रत्यूहव्यवायाः समये क्षणः ।
वेलावारावसरः, प्रस्तावः प्रक्रमोऽन्तरम् ॥१५०९॥

अभ्यादानमुपोद्घात, आरम्भः प्रोपतः क्रमः ।
प्रत्युत्क्रमः प्रयोगः स्यादारोहणं त्वभिक्रमः ॥१५१०॥

आक्रमोऽधिक्रमक्रान्ती, व्युत्क्रमस्तूत्क्रमोऽक्रमः ।
विप्रलम्भो विप्रयोगो, वियोगो विरहः समाः ॥१५११॥

आभा रादो विभूपो श्रीरभिख्या कान्तिविभ्रमाः ।
लक्ष्मी च्छाया च शोभायां, सुषमा साऽतिशायिनी १९१२
संस्तवे स्यात्परिचये, आकारस्त्विङ्ग इङ्गितम् ।
निमित्ते कारण हेतुर्बीज योनिर्निबन्धनम् ॥१९१३॥
निदानमथ कार्य्ये स्यादर्थ कृत्य प्रयोजनम् ।
निष्ठानिर्वहणे तुल्ये, प्रवहो गमन वहि ॥१९१४॥
जाति सामान्य व्यक्तिस्तु, विशेषे पृथगात्मिका ।
तिर्य्यक् साचि सहर्षस्तु, स्पर्द्धा द्रोहस्त्वपक्रिया १९१५
वन्ध्ये मोघाफलमुधा, अन्तर्गडु निरर्थकम् ।
सम्पान सन्निवेशौ स्यादर्थस्यापगमे व्यये ॥१९१६॥
सम्मूर्च्छन त्वभिव्याप्तिर्भ्रेषो भ्रशो यथोचितात् ।
अभावो नाशे सक्रामसक्रमौ दुर्गसञ्चरे ॥१९१७॥
मीवाकस्तु प्रयामे स्यादवक्षो प्रतिजागर ।
समौ विश्रम्भविश्वासौ, परिणामस्तु विक्रिया ॥१९१८॥
चक्रावर्त्तो भ्रमो भ्रान्तिर्भ्रमिर्घूर्णिश्च घूर्णने ।
विप्रलम्भो विसवादो, विलम्भस्त्वतिसर्ज्जनम् ॥१९१९॥
उपलम्भस्त्वनुभवे, प्रतिलम्भस्तु लम्भनम् ।
नियोगे विधिसंप्रैषौ, विनियोगोऽर्पण फले ॥१९२०॥

लवोऽभिलावो लवनं, निष्पावः पवनं पवः ।
निष्ठेवष्ठीवनष्ठ्यूतष्ठवनानि तु थूत्कृते ॥१५२१॥
निवृत्तिः स्यादुपरमो, व्यवोपाङ्भ्यः परा रतिः ।
विधूननं विधुवनं, रिङ्खणं स्खलनं समे ॥१५२२॥
रक्षणस्त्राणे ग्रहो ग्राहे, व्यधो वेधे क्षये क्षियौ ।
स्फरणं स्फुरणे ज्यानिर्जीर्णावथ वरो वृतौ ॥१५२३॥
समुच्चयः समाहारोऽपहारापचयौ समौ ।
प्रत्याहार उपादानं, बुद्धिशक्तिस्तु निष्क्रमः ॥१५२४॥
इत्यादयः क्रियाशब्दा, लक्ष्या धातुषु लक्षणम् ।
अथाव्ययानि वक्ष्यन्ते, स्वः स्वर्गे भू रसातले ॥१५२५॥
भुवो विहायसो व्योम्नि, द्यावाभूम्योस्तु रोदसी ।
उपरिष्टादुपर्यूर्ध्वं, स्यादधस्तादधोऽप्यवाक् ॥१५२६॥
वर्जने त्वन्तरेणर्ते, हिरुङ् नाना पृथग् विना ।
साकं सत्रा समं सार्धममा सह कृतं त्वलम् ॥१५२७॥
भवत्वस्तु च किंतुल्याः, प्रेत्यामुत्र भवान्तरे ।
तूष्णीं तुष्णीकां जोषं च, मौने दिष्ट्या तु सम्मदे ॥
॥१५२८॥

परितः सर्वतो विष्वक्, समन्ताच्च समन्ततः ।
पुरः पुरस्तात्पुरतोऽग्रतः प्रायस्तु भूमनि ॥१५२९॥
साम्प्रतमधुनेदानीं, सम्प्रत्येतर्ह्यथाञ्जसा ।
द्राक् स्रागर झटित्याशु, मङ्क्ष्वह्नाय च सत्वरम् ॥१५३०॥
सदा सनोऽनिशं शश्वद्, भूयोऽभीक्ष्णं पुन पुन ।
असकृन्मुहु सायं तु, दिनान्ते दिवसे दिवा ॥१५३१॥
सहसैकपदे सद्योऽकस्मात् सपदि तत्क्षणे ।
चिराय चिररात्राय, चिरस्य च चिराच्चिरम् ॥१५३२॥
चिरेण दीर्घकालार्थे, कदाचिज्जातु कर्हिचित् ।
दोषा नक्तमुषा रात्रौ, प्रगे प्रातरहर्मुखे ॥१५३३॥
तिर्य्यगर्थे तिर साचि, निष्फले तु वृथा मुधा ।
मृषा मिथ्याऽनृतेऽभ्यर्णे, समया निकषा हिरुक् ॥१५३४॥
श सुखे बलवत्सुष्ठु, किमुतातीव निर्भर ।
प्राक् पुरा प्रथमे वर्षे, सवत् पारस्परे मिथः ॥१५३५॥
उषा निशान्तेऽल्पे किञ्चिन्मनागीषच्च किञ्चन ।
आहो उताहो किमुत, वितर्के किं किमूत च ॥१५३६॥
इतिह स्यात्सम्प्रदाये, हेतौ यत्तद्यतस्ततः ।
सम्बोधनेऽङ्ग भो प्याट् पाट्, हे है हहो अरेऽयि रे ॥
॥१५३७॥

औषट् वौषट् वषट् स्वाहा, स्वधा देवहविर्हुतौ ।
रहस्युपांशु मध्येऽन्तरन्तरेणान्तरेऽन्तरा ॥१५३८॥

प्रादुराविः प्रकाशे स्यादभावे त्वै नै नो नहि ।
हठः प्रसह्ये मा मास्मे, वारणेऽन्तमदर्शने ॥१५३९॥

अकामानुमतौ कामं, स्यादो ओं परमं मते ।
कच्चिदिष्टपरिप्रश्नेऽवश्यं नूनं च निश्चये ॥१५४०॥

बहिर्बहिर्भवे ह्यः स्यादतीतेऽह्नि श्वे एष्यति ।
नीचैरल्पे महत्युच्चैः, सत्वेऽस्ति दुष्ठु निन्दने ॥१५४१॥

ननु च स्याद्विरोधोक्तौ, पक्षान्तरे तु चेद्यदि ।
शनैर्मन्देऽवरे त्वर्वाक्, रोषोक्तावुं नतौ नमः ॥१५४२॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां सामान्यकाण्डः
षष्ठः समाप्तः ॥ ६ ॥

## आचार्यवर्यश्रीहेमचन्द्रविरचिता ।

# शेषनाममाला ॥



प्रणिपत्यार्हत सिद्धसाङ्गशब्दानुशासनः ।
शेषाख्यनाममालाया, नामानि प्रतनोम्यहम् ॥१५४३॥

निर्वाणे स्यात् शीतीभावः शान्तिर्नैश्चिन्त्यमतिर्कः ।
शिष्ये छात्रो भद्रे मव्यं, काम्यं सुकृतसूनृते ॥१५४४॥

फलोदयो मेरुपृष्ठ, वासवावाससैरिकौ ।
दिदिविर्दीदिविर्धुश्च, दिवं च स्वर्गवाचकाः ॥१५४५॥

निर्लिपो कामरूपाश्च, साध्यां शोमोश्चिरायुषे ।
पुभिर्ता मर्त्यमहितौ, सुवार्ता वायुमो सुरा ॥१५४६॥

द्वादशार्का वसवोऽष्टौ, विश्वे देवास्त्रयोदश ।
षट्त्रिंशत्तुषिताश्चैव, षष्टिराभास्वरा अपि ॥१५४७॥

षट्त्रिंशदधिके माहाराजिकाश्च शते उभे ।
रुद्रा एकादशैकोनपचाशद्वायवोऽपरे ॥१५४८॥

चतुर्दश तु वैकुण्ठा, सुशर्माण पुनर्दश ।
साध्याश्च द्वादशेत्याद्या, विज्ञेया गणदेवता ॥१५४९॥

सूर्ये वाजी लोकबंधुर्मनिर्भानुकेसरः ।
सहस्रांको दिवापुष्टः, कालभद्रात्रिनाशनः ॥१५५०॥
वेपीः सदागतिः पीतुः, सांवत्सररथः कपिः ।
हर्शानः पुष्करो ब्रह्मा, बहुरूपश्च कर्णसुः ॥१५५१॥
वेदोदयः खतिलकः, प्रत्यूषाण्डं सुरावृतः ।
लोकप्रकाशनः पीथो, जगद्दीपोऽद्भुतस्करः ॥१५५२॥

अरुणे विपुलस्कंधो, महासारथिराश्मनः ।
चंद्रस्तु मास्तपोराजो, शुभांशुः श्वेतवाहनः ॥१५५३॥
जैर्णः सृप्रो राजराजो, यजतः कृत्तिकाभवः ।
यक्षराडौषधीगर्भः, तपसः शयतो बुधः ॥१५५४॥
स्यन्दः खसिंधुः सिंधूत्थः, श्रविष्ठारमणस्तथा ।
आकाशचमसः पीतुः, क्लेदुः पर्वरिचिक्लिदौ ॥१५५५॥
परिज्वा सुमनो नेमिश्चंदिरः स्नेहुरेकभूः ।
भौमे व्योमोल्मुकैकांगौ, गीष्पतिस्तु महामतिः ॥१५५६॥

प्रख्याः प्रचक्षा वाग् वाग्मी, गौरो दीदिविगीरथौ ।
शुक्रे भृगुः शनौ पंगुः, श्रुतकर्मा महाग्रहः ॥१५५७॥
श्रुतश्रवोऽनुजः कालो, ब्रह्मण्यश्च यमः स्थिरः ।
क्रूरात्मा चाथ राहौ स्यादुपराग उपप्लवः ॥१५५८॥

केतावूर्ध्वकचो 'ज्योतीरथग्रहाश्रयौ ध्रुवे ।
अगस्त्ये विन्ध्यकूटः स्याद्, दक्षिणाशारतिर्मुनि.[3] ॥१९५९॥
सैंयाग्निशिरैणि कौंधिस्तपैन कलशीसुत ।
व्युष्टे निशात्ययगोसर्गौ निशि चक्रभेदिनी ॥१९६०॥
निषद्वरी निशीथ्या निट्, घोरा वासरकन्यका ।
शर्वाक्षी राक्षसी याम्या, पुतोञ्चिस्तामसी तमि ''१९६१
शौवरी 'क्षेणिनी नक्त[15], पैशाची वासुरा उशी ।
दिनात्यय प्रदोषे स्याद्, ध्वान्ते वृत्रोरजोबलम् ॥१९६२॥
रात्रिरागो नीलपङ्को, दिनान्ते दिनकेसर ।
सर्वरागो निशावर्म, विषद्भूतिदिगम्बरे ॥१९६३॥
पक्षः कृष्णः सितो द्वेधा, कृष्णो निशाह्वयोऽपरे ।
शुक्लो दिवाह्वय पूर्वो, मासे वर्षांशको भवत् ॥१९६४॥
वर्षकोशो दिनर्थं, फाल्गुनोऽस्तु फाल्गुने ।
चैत्रे मोहनिकः कामस्तश्च फाल्गुनानुगः ॥१९६५॥
वैशाखे तूत्सवो ज्येष्ठमासे तु खरकोमलै ।
ज्येष्ठामूलीय इति च, कार्त्तिके 'सैरिकोऽर्ग्यो ॥१९६६॥
हिमागमस्तु हेमन, वसन्ते पिकबान्धव ।
पुष्पसमयारणश्चापि, ग्रीष्मे तृष्णायणो मन ॥१९६७॥

आखोरपङ्क्तौ वर्षे तु, ऋतुवृत्तिर्युगांशकः ।
कालग्रंथिर्मासमलः, संवत्सर्वतुशारदौ ॥१९६८॥

वत्स इद्वत्सर इडावत्सरः परिवाणिवत् ।
नक्षत्रवर्त्मनि पुनर्ग्रहनेमिर्नभोवटी ॥१९६९॥

छायापथश्च मेघे तु, व्योमधूमो नभोद्ध्वजः ।
गडयित्नुर्गदयित्नुर्वार्मसिर्वारिवाहनः ॥१९७०॥

खतमालोऽप्यथासारे, धारासंपात इत्यपि ।
करकेऽम्बुघनो मेघकफो मेघास्थिपिंजिका ॥१९७१॥

बीजोदकं तोयडिंभो, वर्षाबीजमिरावरम् ।
यथा परेतरा पूर्वा, परा पूर्वेतरा तथा ॥१९७२॥

यथोत्तरेतराऽपाची, तथाऽपाचीतरोत्तरा ।
इंद्रे तु खंदिरो नेरी, त्रायस्त्रिंशपतिर्जयः ॥१९७३॥

गौरावस्कंदी बन्दीको, वराणो देवदुंदुभिः ।
क्रिणालोतश्च हरिमान्, यामनेमिरसन्महाः ॥१९७४॥

शंपीविर्मिहिरो वज्रदक्षिणो वयुनोऽपि च ।
स्यात्पौलोम्यां तु शक्राणी, माहेधारा शतावरी॥१९७५॥

महेंद्राणी परिपूर्णसहस्रचंद्रवत्यपि ।
जयंते यागसंतानो, वृषणाश्वो हरेर्हये ॥१९७६॥

मातलौ हयकेप: स्यादैरावणे मदावरे: ।
सदादौनो भद्ररेणुं, पुरे स्वैद्रे सुदर्शनम् ॥१९७७॥
नाशिक्ययोस्तु नासत्यैदस्रौ प्रवरवाहनौ ।
गैदातकौ यज्ञवहौ, यमे तु यमुनाग्रज ॥१९७८॥
महासत्य पुराणात, कालकूटोऽस्य राक्षसे ।
पलप्रिय स्तसापुत्रे, कर्बुरो नरविष्वण ॥१९७९॥
आशिरो हतुंप शक्रुर्विधुरो जललोहित ।
उद्दर स्तव्यसमीरो, रक्तग्रीव प्रवाहिक ॥१९८०॥
सध्याबलो रात्रिबलस्त्रिशिरा समितीपेदं: ।
वरुणे तु प्रतीचीशो, दुंदुभ्युद्दामसर्पता ॥१९८१॥
धनदे निधनोत्स स्यान्महासत्त्व प्रमोदितं ।
रत्नगर्भ उत्तराशाधिपति सत्यनगर ॥१९८२॥
धनकेलि सुप्रसन्न, परिविद्धोऽलका पुन: ।
वसुप्रभा वसुसारा, शक्रे नंदिवर्द्धन ॥१९८३॥
बहुरूपे सुप्रसादो, मिहिराणोऽपराजित ।
कर्कटीको गुह्यगुरुर्मगनेत्रातक खहे ॥१९८४॥
परिणाहो दशबाहु, सुभगोऽनेकलोचन ।
गोपालो वरवृद्धोऽहिर्पर्यंक पांसुचर्दने ॥१९८५॥

कूटकृन्मंदरमणिर्नवशक्तिर्महांबुकः ।
कोणवादी शैलधन्वा, विशालाक्षोऽक्षतस्वनः ॥१५८६॥
उन्मत्तवेषः शबरः, सितांगो धर्मवाहनः ।
महाकांतो वह्निनेत्रः, स्त्रीदेहार्द्धो नृवेष्टनः । ॥१५८७।
महानादो नगाधारो, भूरिरेकादशोत्तमः ।
जोटी नोटींगोऽर्द्धकूटः, समिरो धूम्रयोगिनौ ॥१५८८॥
उलंदो यजंतः कालो, जटाधरदर्शान्ययौ ।
संध्यानाटी रेरिहाणः, शंकुश्च कपिलांजनः ॥१५८९॥
जगद्द्रोणिरर्द्धकालो, दिशांप्रियतमोऽतलः
जगत्स्रष्टा कर्टाटंकः, कटप्रूरीरहत्कगौः ॥१५९०॥
गौतमी कौशिकी कृष्णा, तामसी बाभ्रवी जया ।
कालरात्रिर्महामाया, भ्रामरी यादवी वरी ॥१५९१॥
बर्हिध्वजा शूलधरा, परमब्रह्मचारिणी ।
अमोघा विंध्यनिलया, षष्ठी कांतारवासिनी ॥१५९२॥
जांगुली बदरी वासा, वरदा कृष्णपिंगला ।
दृषद्वतींद्रभगिनी, प्रगल्भा रेवती तथा ॥१५९३॥
महाविद्या सिनीवाली, रक्तदंत्येकपाटला ।
एकपर्णा बहुभुजा, नंदपुत्री महाजया ॥१५९४॥

भद्रकाली महाकाली, योगिनी गणनायिका ।
हासा भीमा प्रकूष्माण्डी, नन्दिनी वारुणी हिमा ॥१५९५॥
अनन्ता विजया क्षेमा, मानस्तोका कुहावती ।
चारणी च पितृगणा, स्कन्दमाता घनाञ्जनी ॥१५९६॥
गान्धर्वी भ्रंकुरा गार्गी, सावित्री ब्रह्मचारिणी ।
कोटिश्रीर्मन्दरावासा, केशी मलयवासिनी ॥१५९७॥
कात्यायिनी विशालाक्षी, किराती गोकुलोद्भवा ।
एकानसी नारायणी, शैला शाकम्भरीश्वरी ॥१५९८॥
प्रकीर्णकेशी कुण्डा च, नीलवेलोर्मचारिणी ।
महादंष्ट्राभुजा पौत्री, शिवदूती यमस्वसा ॥१५९९॥
सुन्दरी विकचा ऊर्वी, जयती नकुला कुला ।
विटका नन्दिनी नन्दा, नन्दवती निरञ्जना ॥१६००॥
कौसुम्भी शतमुखी, विकराला करालिका ।
विरजा. पुरोठा भीरी, पट्टपुत्री कुलेश्वरी ॥१६०१॥
वेटमा कालदमनी, दर्दुरा कुलदेवता ।
रौद्रा क्रुद्धा महारौद्री, कालगर्भा महानिशा ॥१६०२॥
चलदंगर्भेक्षा ऋक्षी, हीरी सेवका धेया ।
माता हैमवती चापि, गोत्रा शिखरवासिनी ॥१६०३॥

चामुंडायां महीचंडी, चंडमुंडाऽव्ययाऽऽखुगे ।
पृश्निगर्भः पृश्निशृंगो, द्विशरीरस्त्रिधातुकः ॥१६०४॥

हस्तिमल्लो विषाणांतः, स्कंदे तु करवीरकः ।
सिद्धसेनो वैजयंतो, बालचर्यो दिगंबरः ॥१६०५॥

भृंगी तु चर्म्मी ब्रह्मा तु, क्षेत्रज्ञः पुरुषः सनत् ।
नारायणे तीर्थपादः, पुण्यश्लोको बलिंदमः ॥१६०६॥

उरुक्रमोरुगायौ च, तमोघ्नः श्रवणोऽपि वा ।
उद्दारथिर्लतोपर्णः, सुमेद्रः पांशुजालिकः ॥१६०७॥

चतुर्व्यूहो नवव्यूहो, नवशक्तिः पडंगजित् ।
द्वादशमूलः शतको, दशावतार एकदंष्ट्रक् ॥१६०८॥

हिरण्यकेशः सोमोऽहिस्त्रिधामा त्रिककुत् त्रिपात् ।
मानंजरः परविद्धः, पृश्निगर्भोऽपराजितः ॥१६०९॥

हिरण्यनाभः श्रीगर्भो, वृपोत्साहः सहस्रजित् ।
ऊर्ध्वकर्मा यज्ञधरो, धर्मनेमिरसंयुतः ॥१६१०॥

पुरुषो योगनिद्रालुः, खंडास्यः शलिकोऽजितौ ।
कालकुंठो वरारोहः, श्रीकरो वायुवाहनः ॥१६११॥

वर्द्धमानश्चतुर्दंष्ट्रो, नृसिंहवपुरव्ययः ।
कपिलो भद्रकपिलः, सुषेणः समितिंजयः ॥१६१२॥

ऋतुधामा वासुभद्रो, बहुरूपो महाक्रम ।
विधाताऽऽधार एकाङ्गो, वृषाक्ष सुवृषोऽब्जज ॥१६१३॥
रतिरुद्धं सिद्धुवृषो, जितमन्युर्वृकोदर ।
बहुशृङ्गो रत्नबाहु, पुष्पहासो महातपा ॥१६१४॥
लोकनाभ सूक्ष्मनाभो, धर्मनाभ पराक्रम ।
पद्महासो महाहंस, पद्मगर्भ सुरोत्तम ॥१६१५॥
शतावीरो महामायो, ज्ञाननाभ सरीसृप ।
पृदाकोऽघोमुखो धन्वी, सुवर्णा विघसभुक् स्थिर ॥१६१६
शतानन्द शास्ताऽपि, यवनारि प्रमर्दन ।
यज्ञनेमिर्लोहिताक्ष, एकपाद्द्विपदं कपि ॥१६१७॥
एकशृङ्गो धर्मकील, आनन्द शिवकीर्त्तन ।
शौरिर्वंशी धीवराट्, गोयोगी सुयामुन ॥१६१८॥
बलभद्रे तु भद्राङ्ग, कालो गुप्तचरो बली ।
प्रलेपी भद्रनन्दन, पौर दोषाहिर्नामभृत् ॥१६१९॥
रुक्मिण्यां तु भैष्मी विष्णुशक्ति क्षीराब्धितनुजा ।
कामे तु यौवनोद्भेद, शिम्बिर्मन्युर्महोत्सव ॥१६२०॥
शापान्तक गर्वपेशी, रागरज्जु प्रसर्पक ।
मनोदाही मथनद्ध, गरुडस्तु विषापह ॥१६२१॥

पक्षिसिंहो महापक्षो, महावेगो विशालकः ।
उन्नतीशः स्वमुखभूः, शिठानीहोऽहिभुक्च सः ॥१६२२॥

बुद्धे तु भगवान् योगी, बुधो विज्ञानदेशनः ।
महासत्त्वो लोकनाथो, बोधिरर्हन् सुनिश्चितः ॥१६२३॥

गुणाब्धिर्विगतद्वंद्वो, वचने स्यात्तु जल्पितम् ।
लपितोदितभणिताभिधानगदितान्यपि ॥१६२४॥

हूतौ हक्कारकाऽऽकारौ, चांडालानां तु वल्लकी ।
कांडवीणा कुवीणा च, डक्कारी किंनरी तथा ॥१६२५॥

सारिका खुंखणी चाथ, दर्दरे कलशीमुखः ।
सूत्रकोणो डमरुकं, समौ पणवकिंकणौ ॥१६२६॥

शृंगवाद्ये शृंगमुखं, हुडुक्कस्तालमर्दकः ।
काहला तु कुहाला स्यात्, चंडकोलाहला च सा १६२७॥

संवेशप्रतिबोधार्थं, द्रगडद्रकटावुभौ ।
देवतार्चनतूर्ये तु, धूमलो वैलिरित्यपि ॥१६२८॥

क्षुण्णकं मृतयात्रायां, मांगले प्रियवादिका ।
रणोद्यमे त्वर्धतूरो, वाद्यभेदास्तथाऽपरे ॥१६२९॥

डिंडिमो झर्झरो मड्डुस्तिमिला किरिकिच्चिका ।
लंबिका टट्टरी वेध्या, कलापूरादयोऽपि च ॥१६३०॥

भक्तमंडे तु प्रस्रावप्रस्रवाऽऽच्छोटनाऽऽस्रवाः ।
अपूपे पारिशोलोऽथ, करंबो दधिसक्तुषु ॥१६३८॥

इंडेरिका तु वटिका, शष्कुली त्वर्धलोष्टिका ।
पर्पटास्तु मर्मराला, घृतांडी तु घृतौषणी ॥१६३९॥

समिताखंडाज्यकृतो, मोदको लड्डुकश्च सः ।
एलामरिचादियुतः, स पुनः सिंहकेसरः ॥१६४०॥

लाजेषु महंगोद्भूपखटिकापरिवारकाः ।
दुग्धे योग्यं बालसात्म्यं, जीवनीयं रसोत्तमम् ॥१६४१॥

सरं गव्यं मधुज्येष्ठं, धारोष्णं तु पयोऽमृतम् ।
दधि श्रीघनमंगल्ये, तक्रे कटुरसोरणे ॥१६४२॥

अशोघ्नः परमरसः, कुल्माषाभिषुते पुनः ।
गृहांबुमधुरा चाथ, स्यात् कुस्तुंबुरुरल्लुका ॥१६४३॥

मरिचे तु द्वारवृत्तं, मरिचं वल्लितं तथा ।
पिप्पल्यामूषणा शौंडी, चपला तीक्ष्णतण्डुला ॥१६४४॥

उषणा तण्डुलफला, कोला च कृष्णतण्डुला ।
जीरे जीरणजरणौ, हिंगौ तु भूतनाशनम् ॥१६४५॥

अगूढगंधमत्युग्रं, लिप्सौ लालसलंपटौ ।
लोलो लिप्सा तु धनाया, हेचिरीप्सा च कामना १६४६

पृज्ञा त्वपेचितिरथ, चिपिटो नम्रनासिके ।
पगुरस्तु पीठसर्पी, किरातस्त्वल्पवर्ष्मणि ॥१६४७॥

खर्वे ह्रस्वोऽनेडमूकस्त्वधे न्युब्जस्त्वधोमुखे ।
पित्ते पलोघ्नि पल्लन्वर स्यादग्निरेचक ॥१६४८॥

कफे शिङ्घानक खेट, स्यात कुक्कुदे तु कूर्पद ।
पारिमितोऽथ कायस्थ, कर्णोऽक्षरजीविनि ॥१६४९॥

क्षमे समर्थोऽलम्भूष्णु, पादातपदगौ समौ ।
आवृत्कर्मोलिकोद्वाहे, वरयात्रा तु दौन्दुभी ॥१६५०॥

गोपाली वर्णके शातियात्रा वरनिमन्त्रणं ।
स्यादिंद्राणीमहे 'हेल्लिल्लुर्मगलध्वनि' ॥१६५१॥

स्यात्तु स्वस्त्ययन पूर्णे, कलशे मंगलाह्निकम् ।
शांतिके मगलस्नान, बोरि पल्लवधारिणा ॥१६५२॥

हस्तक्षेपे तु करणं, हस्तबंध तु पीडनगे ।
तच्छेदे समवेभ्रशो, धूलिमेके तु मौतिकम् ॥१६५३॥

कुल्यायां तु दुंदुभी, मन्थुदो कर्कूणिका ।
चपेणी लाचैनी सद्रंशीला मदननालिका ॥१६५४॥

त्रिलोचना मनोहारी, वोलि सरपत्रयोषिति ।
भवगायां किंकुणी स्यात्रेरयायां तु मगोलिका ॥१६५५॥

वारवाणिः कामलेखा, क्षुद्रा चेट्यां गणेरुका ।
वहेवा कुंभदासी च, पुत्रे तु कुलधारकः ॥१६५६॥

सदायादो द्वितीयश्च, पुत्र्यां विद्रा समर्धुका ।
देहसंचारिणी चाप्यपत्ये संतानसंतती ॥१६५७॥

नप्ता तु दुहितुः पुत्रे, स्यात्कनिष्ठे तु कन्यमः ।
ज्येष्ठभगिन्यां तु वीरभवंती स्यात्तु नर्मणि ॥१६५८॥

सुखोत्सवो रागरसो, विनोदोऽपि किलोऽपि च ।
वध्यो जनित्रो रेतोधास्ताते जानी तु मातरि ॥१६५९॥

देहे सिनं प्रजवुकश्चतुःशाखं षडंगकम् ।
व्याधिस्थानं च देहैकदेशे गात्रं कचे पुनः ॥१६६०॥

वृजिनो वेल्लिताग्रोऽश्रो(स्रो), धम्मिल्ले मौलिजूटकौ ।
वेत्ररी तु कबर्यां स्यात्, प्रलोम्यो विपदे कचे ॥१६६१॥

मुखे दंताढ्यस्तेरं, धनं चेरं घनोत्तमम् ।
कर्णप्रांतस्तु धारा स्यात्, कर्णमूलं तु शीलकम् ॥१६६२॥

अक्ष्णि रूपग्रहो देवदीपो नासा तु गंधहृत् ।
नसा गंधवहा नस्या, नासिकेयं गंधनालिका ॥१६६३॥

ओष्ठे तु दशनोच्छिष्टो, रसालेपी च वाग्दलम् ।
श्मश्रुणि व्यंजनं कोटो, दंते मुखखुरः खरुः ॥१६६४॥

जातीफले सौमनसं, पुटकं मदशौंडकम् ।
कोशफलं कुंकुमे तु, करटं वासनीयकम् ॥१६७४॥
प्रियंगु पीतकावेरं, घोरं पुष्परजो वरम् ।
कुसुंभं च जरापुष्पं, कुसुमान्तं च गौरवम् ॥१६७५॥
वृक्षधूपे तु श्रीवेष्टो, दधिक्षीरघृताह्वयः ।
रचनायां परिस्पंदः, प्रतियत्नोऽथ कुंडले ॥१६७६॥
कर्णादर्शौ मेखला तु, लोलिनी कटिमोलिका ।
अथ किङ्किण्यां घर्घरी, विचौ विद्यामणिस्तथा ॥१६७७॥
नूपुरे तु पादशीली, मंदीरं पादनालिका ।
पादांगुलीयके पादपोलिका पादकीलिका ॥१६७८॥
वस्त्रे निवसनं वस्त्रं, सैन्नं कर्पटमित्यपि ।
दशासु वस्त्रपेर्योऽथ, हिमवातापहांशुके ॥१६७९॥
द्विखंडको वरकश्च, चक्रवर्तिन्यधीश्वरः ।
अर्जुने विजयश्चित्रयोधी चित्रांगसूदनः ॥१६८०॥
योगी धन्वी कृष्णपक्षो, नंदिघोषस्तु तद्रथः ।
ग्रंथिकस्तु सहदेवो, नकुलस्तंतिपालकः ॥१६८१॥
माद्रेयाविमौ कौंतेया, भीमार्जुनयुधिष्ठिराः ।
द्वयेऽपि पांडवेयाः स्युः, पांडवाःपांडवायनाः ॥१६८२॥

राज्ञश्छत्रे नृपलक्ष्म, चमरं स्यात्तु चामरे ।
स्यान्न्यायद्रष्टरि स्थेयो, द्वाःस्थो द्वास्थितिदर्शकः ॥१९८३॥
क्षुद्रोपकरणानां स्यादध्यक्षः पारिकर्मिकः ।
पुराध्यक्षे कोट्टपतिः, पौरिको दाण्डपाशिकः ॥१९८४॥
वेध्ये निमित्तं बाणे तु, लक्ष्यहा मर्मभेदनः
वीरश्च वीरशङ्कुश्च, कोदण्डोऽप्यर्धकण्टकः ॥१९८५॥
नाराचे लोहनालोऽस्त्रसायकोऽसिस्तु सायकः ।
श्रीगर्भो विजयः शास्ता, व्यवहारः प्रजाकरः ॥१९८६॥
धर्मपालोऽक्षरो देवस्तीक्ष्णकर्मा दुरासदः ।
प्रसगो रुद्रतनयो, मनुर्ज्येष्ठः शिवङ्करः ॥१९८७॥
करपालो विशसनस्तीक्ष्णधारो विषाग्रजः ।
धर्मप्रचारो धौरागो, धाराधरकौक्षिकौ ॥१९८८॥
चन्द्रहासश्च शैखोऽपि, क्षुरपत्री कोशशायिका ।
पत्रं च धेनुका पत्रपाले तु कुलपातृका ॥१९८९॥
कृटंती* पत्रफलाऽपि, शक्तिः कासूर्महाफला ।
अष्टतालाऽऽयतौ सा च, पट्टिशस्तु क्षुरोपमः ॥१९९०॥
लोहदण्डस्तीक्ष्णधारो, दु स्फोटोऽऽराफलौ समौ ।
धनुः सु दरदेवायमरसंचितमित्यपि ॥१९९१॥

शतघ्नी तु चतुस्तौला, लोहकंटकसंचिता ।
अयःकंटकसंछन्ना, शतघ्न्येव महाशिला ॥११९२॥

भुशुण्डी स्याद्दारुमयी, वृत्तायःकीलसंचिता ।
कर्णयो लोहमात्रोऽथ, चिरिका तु हुलाग्रका ॥११९३॥

वराहकर्णकोऽन्वर्थः, फलपत्राग्रके हुलम् ।
मुनयोऽस्त्रशेखरं च, शराभ्यास उपासनम् ॥११९४॥

जिष्णौ तु विजयी जैत्रः, स्यात् शृगाली तु विप्लवे ।
करमध्ये सौम्यं तीर्थमथ स्यान्नियमे तपः ॥११९५॥

सत्यवत्यां गंधवती, मत्स्योदर्यथ वक्रथे ।
साक्षिकोऽथ साक्षिणि स्यात्,मध्यस्थःप्राश्निकोऽन्यथ ११९६

कूटसाक्षी मृषासाक्ष्ये, सूची स्याद् दुष्टसाक्षिणि ।
पादुकायां पादरक्षी, पादजंगुः पदत्वरा ॥११९७॥

पादवीथी च पेशी च, पादपीठी पदायता ।
नापिते ग्रामणीमंडिवाहक्षौरिकभांडिकाः ॥११९८॥

## इति शेषनाममालायां नरकांडस्तृतीयः

अथ पृथ्वी महाकांता, क्षांता मन्वेद्रिकर्णिका ।
गोत्रकीला घनश्रेणी, मध्यलोका जगद्रुहा ॥११९९॥

देहिनी केठिनी मौलिर्महास्थौरथचास्थैली ।
गिरौ प्रवीती कुट्टार, उर्वी कन्दराकर ॥१७००॥
कैलासे घनदावासो, हराद्रिर्हिमवैद्रस ।
मलयश्चन्दनगिरि, स्याल्लोहेऽश्मीनैचीवेरे ॥१७०१॥
ताम्रे पवित्रं कांस्यं च, सीसके तु महाबलम् ।
चीनपट्ट समोलूंक, क्रैष्ण च त्रपुचपक ॥१७०२॥
त्रपुणि श्वेतरूप्य स्यात्, शैठ सत्वण रजं ।
परीस मधुक ज्येष्ठ, धिन च मुखभूषणम् ॥१७०३॥
रजते श्वापुष वर्ग, जीवन वसु मीहेकम् ।
शुभ्र सौम्य च शोध्य च, हेम मीहजवीर्यसम ॥१७०४॥
सुवर्णे शोभन शुक, तारजीवनमौर्णवम् ।
दाक्षायण रक्तवर्णं श्रीमकुम शिलोद्भवम् ॥१७०५॥
पैणव तु कणिकाव्हाय वेणुतेढीभवम् ।
जले दिव्यैमिरीसेव्यं, कीटीट मूर्तदक्षुरम् ॥१७०६॥
विष विर्वेल्पार्तालनदिनोजि च जवीरम् ।
पावन पेद्दूस चापि, पल्लूर तु शिन पय ॥१७०७॥
किट्टिम तदटिक्षार, शाल्क पक्षपाथिरम् ।
अंबं तु कशुप तोयमतिस्वच्छ तु कौचिमम् ॥१७०८॥

समुद्रे तु महाकच्छः, दारदो धरणीप्लवः ।
महीप्रावार उर्व्वंगस्तिमिकोशो महाशयः ॥१७०९॥

मुरन्दला तु मुरला सुरवेला सुनंदिनी ।
चर्म्मण्वती रंतिनदी, संभेदः सिंधुसंगमः ॥१७१०॥

नीका तु सारणावश्यौ, वैमिर्दीप्रः समंतभुक् ।
पर्परीकः पविर्वासिः, पृथुर्घर्मुरिराशिरः ॥१७११॥

जुहुराणः पृदाकुश्च, कुशाकुर्हवनो हविः ।
घृतार्चिर्नाचिकेतश्च, पृष्ठो वंचतिरंचेतिः ॥१७१२॥

मुंजिमैरथपीथौ चास्विनिः पवनवाहनः ।
वायौ सुरालयः प्राणः, संभूतो जलभूषणः ॥१७१३॥

शुचिर्विंहो लोलघंटः, पश्चिमोत्तरदिक्पतिः ।
अंकतिः क्षिपणुर्मर्को, ध्वजप्रहरणश्चलः ॥१७१४॥

शीतलो जलकांतारो, मेघारिः मृर्मरोऽपि च ।
वृक्षे त्वारोहकः स्कंधी, सीमिको हरितच्छदः ॥१७१५॥

उरुर्जंतुर्वह्निभूश्च, स्यात्तु श्वेतः कपर्दके ।
खद्योते तु कीटमणिर्ज्योतिर्माली तमोमणिः ॥१७१६॥

परावुंदो निमेषद्युत, ध्वांतश्चित्रोऽथ कुंजरे ।
पेचकी पुष्करी पद्मी, पेचिलः सूचिकाधरः ॥१७१७॥

विलोमजिह्वोऽनस्वेदो, महाकायो महामद ।
सूर्पकर्णो जलाकाङ्क्षो, घटी च षष्टिहायन ॥१७१८॥
अङ्कुरो दीर्घपवने, शुण्डाल पविरित्यपि ।
वशाया वासितो कर्णधारिणी गणिका(कणिका)पिच ॥१९॥
अश्वे तु कर्पेण कुण्डी, प्रोथी हेषी प्रकीर्णक ।
पाइक पहैल किर्वी, कुटेर सिंहविक्रम ॥१७२०॥
मापाशी केसरी हंसो, मुहुर्भुग् गूढभोजन ।
वीतिहोत्र शालिहोत्रो, लक्ष्मीपुत्रो महेन्द्रेय ॥१७२१॥
चामरव्यकशेफोऽपि स्यादश्वाया पुनर्वती ।
मल्लिकाक्ष सितेनेत्रे, स्याद्वार्गीद्रोणघोऽसिते ॥१७२२॥
कर्कन्दी ककुदावर्त्तो, निर्मुष्कस्त्विवर्द्धवृद्धिक ।
शुनि क्रोधी रसापायी, शिवारि सूनको रुरु ॥१७२३॥
वनतप स्वजातिद्विट्, कृतज्ञो मलेदस्य स ।
दीर्घनाद पुरोगामी, स्यादिदमहकामुक ॥१७२४॥
मर्कट कपिलो ग्रामसृगध्वांक्षनहोऽपि च ।
महिषे कलुष पिगे, कटाहो गद्गदस्वर ॥१७२५॥
हेरम्बे स्कन्धशृङ्गश्च, मिहे तु स्यात्पटोप ।
शैलाटो वनराजश्च, नम कान्तो गणेश्वर ॥१७२६॥

शृंगोष्णीषो रक्तजिह्वो व्यादीर्णास्यः सुगंधिकः ।
शूकरे कुमुखः कामरूपी च सलिलप्रियः ॥१७२७॥
तलेक्षणो वक्रदंष्ट्रः, पंकक्रीडनकोऽपि च ।
मृगे त्वजिनयोनिः स्यादथो भुजगभोजिनि ॥१७२८॥
अहीरणीर्द्विमुखश्च, भवेत् पक्षिणि चंचुमान् ।
कंठाग्निः कीकसमुखो, लोमकी रसनारदः ॥१७२९॥
वारंगनाडीचरणौ, मयूरे चित्रपिंगलः ।
नृत्यप्रियः स्थिरमदः, खिलखिल्लो गरव्रतः ॥१७३०॥
मार्जारकंठो मरूको, मेघनादानुलासकः ।
मयूको बहुलग्रीवो, नगावासश्च चंद्रकी ॥१७३१॥
कोकिले तु मदोल्लापी, काकजातो रतोद्वहः ।
मधुघोषो मधुकंठः, सुधाकंठः कुहूमुखः ॥१७३२॥
घोषयित्नुः पोषयित्नुः, कामतालः कुनालिकः ।
कुक्कुटे तु दीर्घनादः, चर्म्मचूडो नखायुधः ॥१७३३॥
मयूरचटकः शौंडो, रणेच्छुश्च कलाधिकः ।
आरणी विष्किरो बोधिर्नंदीकःपुष्टिवर्धनः ॥१७३४॥
चित्रवाजो महायोगी, स्वस्तिको मणिकंठकः ।
उषाकीलो विशोकश्च, ग्राजस्तु ग्रामकुक्कुटः ॥१७३५॥

हंसेषु तु मरालाः स्युः, सारसे दीर्घजानुकः ।
गोनर्दो मैथुनी कामी, श्येनोऽक्षो रक्तमस्तकः ॥१७३६॥
गृध्रे तु पुरुषव्याघ्रः, कामायु कूणितेक्षणः ।
सुदर्शनः शकुन्याजौ, शुके तु प्रियदर्शकः ॥१७३७॥
श्रीमान् मेधातिथिर्वाग्मी, मत्स्ये तु जलपिप्पिकः ।
मूको जलाशयः शेवः, सहस्रदंष्ट्रस्त्वेतनैः ॥१७३८॥
जल्वालो वदालोऽथ, पाठीने मृदुपाठकः ।
इति शेषसंग्रहनाममालाया चतुर्थकाण्डः ॥
अथ रत्नप्रभा घर्मा, वंशा तु शर्कराप्रभा ॥१७३९॥
स्याद्वालुकाप्रभा शैला, भवेत्पङ्कप्रभाऽञ्जना ।
धूमप्रभा पुना रिष्टा, माघव्या तु तमःप्रभा ॥१७४०॥
महातमप्रभा माघव्येव नरकभूमयः ।
इति नारककाण्डः पंचमः ॥ ५ ॥
आनुकूल्यार्थकं प्राध्वंमसाकल्ये तु चिंचनैः ॥१७४१॥
तु हि च स्म ह वै पादपूरणे पूजने स्वती ।
उत वा यथा तथैवैव, साम्येऽहो ही च विस्मये ॥१७४२॥
स्युरेव तु पुनर्वैवत्यवधारणवाचकाः ।
ऊ पृच्छायामतीते प्राक्, निश्चयेऽद्धाऽञ्जसा द्वयम् ॥१७४३॥

अतो हेतौ महः प्रत्यारंभेऽथ स्वयमात्मनि ।
प्रशंसने तु सुष्ठु स्यात्, परश्वः श्वः परेऽहनि ॥१७४४॥

अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वेद्युरादयः ।
समानेऽहनि सद्यः स्यात्, परे त्वह्नि परेद्यवि ॥१७४५॥

उभयद्युस्तूभयेद्युः, समे युगपदेकदा ।
स्यात्तदानीं तदा तर्हि, यदा यर्ह्यन्यदैकदा ॥१७४६॥

परुत्परार्य्यैषमोऽब्दे, पूर्वे पूर्वतरेऽत्र च ।
प्रकारेऽन्यथेतरथा, कथमित्थं यथा तथा ॥१७४७॥

द्विधा द्वेधा त्रिधा त्रेधा, चतुर्द्धा द्वैधमादि च ।
द्विस्त्रिश्चतुःपंचकृत्व, इत्याद्यावर्त्तने कृते ॥१७४८॥

दिग्देशकाले पूर्वादौ, प्रागुदक्प्रत्यगादयः ।
अव्ययानामनंतत्वाद्दिग्मात्रमिह दर्शितम् ॥१७४९॥

इयंत इति संख्यानं, निपातानां न विद्यते ।
प्रयोजनवशादेते, निपात्यंते पदे पदे ॥१७५०॥

इत्याचार्यश्रीहेमचंद्रविरचिता शेषनाममाला ॥

# अथ श्रीमज्जिनदेवमुनीश्वरविरचितः
# शिलोञ्छः

अर्हं बीज नमस्कृत्य, गुरूणामुपदेशात ।
श्रीहैमनाममालाया , शिलोञ्छे क्रियते मया ॥१७५१॥
सर्वीयै इत्यपि जिने, समवे शामवेऽपि च ।
श्रीमुव्रते मुनिरैपि, नेमौ नेमीत्यपीष्यते ॥१७५२॥
षष्ठे गणेशे मण्डितपुत्रोऽपि कथ्यते बुधे ।
मरुदेव्यैपि विज्ञेया, युगादिजिनमातरि ॥१७५३॥
धर्मेऽध्यर्यामप्रतिचक्रोऽप्यजितापि कविभिरजितबलौ ।
श्यामा त्वच्युतदेव्यपि सुतारिकोक्ता सुतारापि ॥१७५४॥
यैदरश्छेदकरोऽपि, श्रमण श्रवणोऽपि च ।
महाभद्रमपि प्राहु , प्रशान्तमपि कोविदा ॥१७५५॥
प्रमैन्याऽपि परिमन्या, शिष्योऽन्तेषदेऽपि स्मृतः ।
इति प्रथमकाण्डस्य, शिलोञ्छोऽय समर्पित ॥१७५६॥

---

(१) शिलोञ्छो नाम कणशः समादानम् [illegible], तद्वदपि हैमनाममालाया अवशेषशब्दानां चयनं कृतम् । (२) मन्दोऽपि' इत्यभिधानचिन्तामणिः ।

व्योमयानमपि प्रोक्तं, विमानं बुधपुङ्गवैः ।
स्यात्समुद्रनवनीतं, पियूषमपि चामृतम् ॥१७५७॥
कथ्यन्ते व्यन्तरा वानमन्तरा अपि सूरिभिः ।
द्योतस्तथा पृष्णिमुष्णी,[3] प्रोक्ता रश्म्यभिधायकाः॥१७५८
समुद्रनवनीतं च, विदुश्चन्द्रमसं बुधाः ।
चन्द्रिका चन्द्रिमाऽपि स्यादिल्वला इन्वका अपि॥१७५९
अनुराधाऽप्यनूराधा, गुरुः सप्तर्षिजोऽपि च ।
सौरिः सौरोऽपि राहुस्तु, ग्रहकल्लोल इत्यपि ॥१७६०॥
अभ्रपिशाचोऽपि तथा, नाडिका नालिकाऽपि च ।
रात्रौ यामवतीतुङ्ग्यौ, निःसंपातो निशीथवत् ॥१७६१॥
तमः स्यादन्धतमसं, वर्षाः स्युर्वर्षिषा अपि ।
खेऽन्तरीक्षं सांसृष्टकमपि तत्कालजे फले ॥१७६२॥
मेघमाला कालिकाऽपि, वार्दलं चापि दुर्दिने ।
सुत्रामायीन्द्रे शतारः, शतधारोऽपि चाशनौ ॥१७६३॥
आश्विनेयौ स्वर्गवैद्यौ, हर्यक्षोऽपि धनाधिपे ।
अजगवमजगावमपि शङ्करधन्वनि ॥१७६४॥

---

१ 'वृष्णिरित्यन्ये' इत्यभिधानचिन्तामणिः । २ 'बाहुलकाद्दीर्घत्वे 'अन्वातमसमित्यपि' इत्यभिधानचिन्तामणिः । ३ सूत्रामायो हलंतः शशिवत् ।

गौर्यां दाक्षायणीश्वर्यौ, नारायणे जलेशयः ।
कौमोदकी कौपोदकी[१], औ ई शब्दौ श्रिया मतौ॥१७६५
कन्दुः कन्दर्पे सिद्धार्थे, सुगते परिकीर्त्तितः ।
अङ्के व्याख्याविवाहाभ्यां, प्रैङ्खोलिरपि पञ्चमे ॥१७६६॥
दृष्टिपातो द्वादशाङ्क्या, कल्याणेऽवन्ध्यमव्ययं ।
निंदा गर्हा जुगुप्साया, क्षारणा रतिगालिषु ॥१७६७॥
समाख्यापि समाज्ञावद्भुशतीवद्भुशत्यपि ।
काल्याऽपि कल्यो सवाया, समाधिरपि वध्यते॥१७६८॥
व्रीडे सुकी मन्दाक्षेऽथ, ह्रियामूहोऽपि चोहवत् ।
तन्द्रिस्तन्द्री च निद्रायांमहप्रथमिकापि च ॥१७६९॥
अहंपूर्विकाया केलीकीलोऽपि स्याद्विदूषके ।
मौर्यवन्मौरिपोऽशीति, शिलोञ्छो देवकाण्डग ॥१७७०॥
स्तनन्धये स्तनपेश्च, क्षीरपेश्चाभिधीयते ।
तारुण्य स्याद्यौवनिका, दशमीस्थो जरत्तरे ॥१७७१॥
कवितापि कवि स्यात् तत्कर्मणि कृतेकृत्यकृतिर्कृतार्थाश्च ।
क्लिष्टाशयोऽपि कुनरोऽन्धमडशठेष्वप्यनेडमूकम्मस्तु।१७७२

---

१ 'अहमिका च'

वदान्यौ[1] पृथगित्यन्ये, दानशीलप्रियंवदौ[1] ।
मूर्खे यथोद्गतोऽपीष्ये, श्रीमानपि बुधैः स्मृतः ॥१७७३॥

विवधकवीवधिकावपि वैवधिके प्रतिचरोऽपि भृत्ये स्यात् ।
संमार्जको[1] बहुकरे बहुधान्यार्जक इतीष्यते च परैः॥१७७४॥

विहङ्गिकायां च विहङ्गिमोऽप्यथौर्ध्वदेहिके ।
और्ध्वदेहिकमप्याहुरनृजो शण्ठे इत्यपि ॥१७७५॥

मायाविमायिकौ[2] धूर्ते, कपटे तु पधा मता ।
चौरश्चोरोऽपि विज्ञेयः, स्तेयं स्तैन्यमपीष्यते ॥१७७६॥

दाने प्रादेशनमपि, क्षमा स्यात् क्षान्तिरित्यपि ।
क्रोधनः कोपनस्तृष्णक्, पिपासितोऽपि कथ्यते॥१७७७॥

भक्षकः स्यादाशिरोऽपि, मर्जितापि च मार्जिता ।
पेयूषमपि पीयूषं, कूचिकापि च कूर्चिका ॥१७७८॥

द्रप्से द्रप्स्यमपि प्रोक्तं, विजिपिलं[1] च पिच्छिले ।
व्योषे त्रिकटुकं जग्धौ, जमनं जक्षनं[2] तथा ॥१७७९॥

आघ्राणोऽपि भवेत्तृप्तौ, शौष्कलः पिशिताशिनि ।
मनोराज्यमनोगव्यावपि स्यातां मनोरथे ॥१७८०॥

---

१ 'दानशीलप्रियवाचौ वदान्यौ पृथक्' इत्यभिधानचिन्तामणिः।

कामुके कमनोऽपि स्यादाक्षारितोऽपि[१] दूषिते ।
संशयाच्च सांशयिकी[१], जागरितापि जागरी ॥१७८१॥
पूजितेऽपचायितोऽपि[१], तुन्दिमोदरिकावपि ।
तुन्दिले न्युब्जोऽपि कुब्जे, खलतोऽप्यैन्द्रलुप्तिके॥१७८२
पामरोऽपि कच्छुरोऽतीसारक्यप्यतिसारकी ।
कुण्डूतिरपि खर्जूतिर्विस्फोटे पिटके स्मृतः ॥१७८३॥
कोठे मण्डलकमपि, गुदकीलोऽपि चाऽर्शसि ।
मेहे प्रमेहवदायुर्वेदिकोऽपि चिकित्सके ॥१७८४॥
आयुष्मानपि दीर्घायुः, कथ्यतेऽप परीक्षकः ।
स्यादाक्षपाटलिकोऽपि[१], पारिषद्योऽपि[१] सभ्यवत्॥१७८५
स्युर्नैमित्तिकनैमित्तमौहूर्त्ता गणके लिपौ ।
लिखितोऽपि मषी मेला, कुलिके कुलकोऽपि च ॥१७८६
अष्टापदे बुधे शारिफलकोऽपि निगद्यते ।
मनोजवस्तातत्तुल्ये, प्रभविष्णुरपि क्षमे ॥१७८७॥
आह्निके मह्नाकरोऽपि[१], चानुगोऽप्यनुगामिनि ।
पर्य्येषणोपासनेऽपि, शुश्रूषायामधीयते ॥१७८८॥

---

१ 'कुष्टपरधक्रम्' इत्यभिधानचिन्तामणिस्यव्युत्पत्त्या द्वितीयान्त रूपम् । २ 'आयुर्वेदिक' इत्यभिधानचिन्तामणि ।

आतिथ्यो[1]ऽप्यतिथौ तुल्येऽभिजो[1] गोत्रे तु सन्ततिः[1] ।
महेला[1] योषिता[2] च स्त्री, तरुणी युवतीत्यपि ॥१७८९॥
सुवासिनी चरिण्टी[1] च, चिरण्टी[2] च चरण्त्यपि[3] ।
वधूट्यां पत्न्यां करात्ती[1], गेहिनी[2] सहधर्मिणी[3] ॥१७९०॥
सधर्मचारिणी[4] चापि, स्नुषायां तु वधूट्यपि[1] ।
प्रेमवत्यपि[1] कान्तायां, प्राणिग्रहो[1] विवोढरि ॥१७९१॥
परिणेतो[2]पयन्ता[3] च, यौतके दाये[1] इत्यपि ।
दिधीषूर्दिधिषूर्जीवत्पत्नी जीवत्पतिः[1] समे ॥१७९२॥
तुल्ये अवीरा[1]निर्वीरे[2], श्रवणा[1]श्रवणे[2] तथा ।
रण्डापि[1] विधवा पुष्पवती स्यात्पुष्पिता[1]पि च ॥ १७९३॥
पुष्पे कुसुम[1]मप्युक्तं, पशुधर्मो[1]ऽपि मोहने ।
सहोदरे सगर्भो[1]ऽपि, स्यादग्रजवदग्रिमः[1] ॥१७९४॥
शण्ठः[1] शठः पण्डुरपि[1], क्लीबो माता जनित्र्यपि[1] ।
चिहुरा[1] अपि केशाः स्युः, कर्णः[1] शब्दग्रहो[1]ऽपि च ॥९५॥
नेत्रं विलोचन[1]मपि, सृक्कणी[1] सृक्कणी अपि ।
दाढिका द्राढिकापि स्यात्कफोणिस्तु[1] कफोणिवत् ॥९६॥
कूर्परे कूर्परः[1] सिंहतले संहतलो[1]ऽपि च ।
चल्लुको[1]ऽपि[1] चलौ मुष्के, स्याद्आण्डः[1] पेलको[1]ऽपि[2] च॥९७॥

पैत्वादेर्ङ्घ्रिमध्यं चरणे, कीकसं हड्डमित्यपि ।
कपालं शकलमेपि, पृष्ठास्थनि कशारुकौ ॥१७९८॥
मज्जायामस्थितेजोऽपि[1], नाडीषु नाडिनाटिके[2] ।
सिङ्घाणकोऽपि सिङ्घाणे, स्तृणीकां स्तृणिकापि च॥९९॥
शान्तं पातिपश्चे विड्गुपेऽशुचिर्मेशोऽपि[1] वेपवत् ।
उत्सादनोच्छादने च, प्लवप्लावौ[2] तथा समौ[2] ॥१८००॥
वशाकं कृमिजग्धं चागरौ स्यादथ वाह्लिकम् ।
सङ्कोचं पिशुनं वर्ण्यमसृक्पंज्ञं च कुङ्कुमे ॥१८०१॥
आपके कालानुसार्य्यं, यावनोऽपि च सिह्लके ।
मकुटोऽपि[1] कोटीरे, चित्रकञ्च विशेषके ॥१८०२॥
वतंसोऽप्यवतंसे स्यात्पत्रभंग्या तु वल्लरी[1] ।
मंञ्जरी[2] च पत्रात्पारितथ्यौ पर्यवतथ्यया ॥१८०३॥
कर्णान्दूरपि कर्णान्दु, परिहार्येऽपि कङ्कणे ।
किङ्कणी[1] किङ्किणी तुल्ये, आच्छादोच्छादने[1] समे
कूर्पासेऽप्यङ्गिका कक्षापटे कक्षापुटोऽपि[1] च ।
कुपे वर्णपरिस्तोमे इत्यखण्डं जगु परे ॥१८०५॥

---

१ ' गृणीका, सृणिका ' इत्यभिधानचिन्तामणि । २ ' आप्लवाप्लावौ ' इत्यभिधान० । ३ पत्रमञ्जरी ।

तत्रास्तरणमिति च पल्यङ्कोऽप्यवसक्थिका ।
यमन्येपि प्रतिसीरा, संस्तरः प्रस्तरोऽपि च ॥१८०६॥

पतद्ग्राहप्रतिग्राहावपि स्यातां पतद्ग्रहे ।
मकुरोऽप्यात्मदर्शोऽथ, कशिपुः कौसिपुः समौ ॥१८०७॥

यावकालक्तकौ[2] यावे, तुल्ये व्यजनवीजने[2] ।
गीरीयको[1] गिरिकोऽपि, बालक्रीडनके मतौ ॥१८०८॥

गण्डकोऽपि गन्दुको[1] राष्ट्रे, मूर्द्धावसिक्ते इत्यपि ।
भरतः सर्वदमनोऽप्यथ दाशरथावुभौ ॥१८०९॥

रामचन्द्ररामभद्रौ[2], हनूमानपि मारुतौ ।
वालौ सुग्रीवाग्रजोऽपि[1], पार्थे बीभत्सुरित्यपि ॥१८१०॥

सातवाहनवत्सालवाहनोऽपि[1] प्रकीर्त्तितः ।
परिच्छदे परिजनः, परिवर्कणमित्यपि ॥१८११॥

मन्त्री बुद्धिसहायोऽपि[1], वेत्री वेत्रधरोऽपि[1] च ।
हेमाध्यक्षे हैरिकोऽपि[1], टंकपतिस्तु नैष्किके ॥१८१२॥

शुद्धान्ताध्यक्ष आन्तर्वेशिमकान्तःपुरिकावपि ।
सहायसाप्तपदीनौ[2], सख्यावसुहृदप्यरौ ॥१८१३॥

नये नीतिरपि स्कन्धावारेऽपि शिबिरो मतः ।
जयन्त्येपि वैजयन्त्यां, पताकापि प्रकीर्त्यते ॥१८१४॥

ध्वजः पताकादण्डोऽपि, झम्पान याप्ययानवत् ।
सादी सव्येष्ठोऽपि सूते, कवचितोऽपि वर्मिते ॥१८१५॥
कवचे दशनं त्वक्त्र, तनुत्राणमपि स्मृतम् ।
अद्वियोग वियोग चाभिकाङ्कवदुदाहरम् ॥१८१६॥
शिरस्कं खोलमप्याहु , स्यान्निषङ्ग्यपि तूणिनि ।
चापे धनूर्धनुःशरासनान्यपि विदुर्बुधा ॥१८१७॥
फरकस्फरकौ खेटे, क्षुरिका छुरिका छुरी ।
कृत्या तरवारिकोऽपि, परिघ पलिघे समौ ॥१८१८॥
उषस्युषस्याने मगधो, मंषो बोधकरोऽर्थिक ।
सौखशायनिके सौखशय्यिकौ सौखसुप्तिके ॥१८१९॥
रणे सस्फेटसफेटौ, बले द्रविणमूर्क् तथा ।
अवस्कन्नोऽपि धाट्या स्यान्नशनञ्च पलायने ॥१८२०॥
चारकोऽपि भवेद् गुप्तौ, तापसे तु तपस्व्यपि ।
विप्रे ब्रह्मोऽपि चाग्नीध्राऽग्नीध्रोऽप्यथ वृषी वृसी[1] ॥१८२१॥
शासने शमनश्चापि, दधि प्राज्यं पृषातके ।
अग्निहोत्र्यग्न्याहितोऽप्यथोपवासे समाविमौ ॥१८२२॥

---

१ 'मरस' इत्यभिधानचिन्तामणौ ।

उपवस्त्रमौपवस्त्रमुपवीते प्रचक्षते ।
ब्रह्मसूत्रं पवित्रञ्च, वाल्मीकौ द्वाविमावपि ॥१८२३॥
मैत्रावरुण्यादिकवी[२], पर्शुरामोऽपि[१] भार्गवे ।
योगीशो याज्ञवल्क्योऽपि, दाक्षीपुत्रोऽपि[१] पाणिनौ ॥२४॥
स्फोटायनः स्फौटायनः, कात्यो[१] वररुचौ तथा ।
कारेणवः पालकाप्ये, चाणक्यश्चणकात्मजे ॥१८२५॥
वैशेषिके कणादोऽपि, जैनोऽनैकान्तवाद्यपि ।
चार्वाके लौकायतिकः, कृपिः प्रसृनेमित्यपि ॥१८२६॥
न्यासार्पणे परिदानं, वणिक् प्रापणिकः स्मृतः ।
अयुते नियुतं[१] पोते, स्मृतं प्रवहणं[१] बुधैः ॥१८२७॥
कर्णोऽपारित्रे दुर्गस्य, गवेश्वरोऽपि गोमति ।
कर्षके क्षेत्रजीवोऽपि, कोटीशो[१] लोष्टभेदनः ॥१८२८॥
मार्द्वीकमपि मद्येऽनुतर्षोऽपि चषके स्मृतः ।
कुविन्दे तन्त्रवायोऽपि, वेमा व्योमापि कीर्त्यते ॥१८२९॥
रजको धावकोऽप्युक्तः, पादत्राणञ्च पादुका ।
तैलिकस्तैलंतुदोऽपि, रथकारोऽपि वर्द्धकिः ॥१८३०॥

---

(१) 'प्रभृतः' इत्यभिधानचिन्तामणौ ।

चित्रकारो लेखकश्च, लेपकृल्लेपकोऽपि च ।
कुतूहले विनोदोऽपि, सौनिकः खट्टिकोऽपि च ॥१८३१॥
कूटयन्त्रे पाशयन्त्रं, समौ चाण्डालपुष्कसौ ।
इत्थ तृतीयकाण्डस्य, शिलोञ्छोऽयं समर्थितः ॥१८३२॥
रत्नवती भुवि दिवस्पृथिव्यावपि रोदसी ।
माणिबन्धं माणिमतं, सैन्धवे वसुके वसु ॥१८३३॥
टङ्कनटङ्कणे उपावर्त्तनं चापि नीवृति ।
जङ्गल स्याज्जाङ्गलोऽपि, मालवन्मालको मत ॥१८३४॥
पत्तने पट्टनमपि, कुण्डिने कुण्डिनापुरम् ।
स्यात्कुण्डिनपुरमपि, विपणौ पण्यवीथिका ॥१८३५॥
सुरङ्गाया सन्धिरपि, गृहे धाममपि स्मृतम् ।
उपकार्य्योपकार्य्यापि, प्रासादे च प्रसादनं ॥१८३६॥
शान्तीगृहं शान्तिगृहे, प्राङ्गणं त्वङ्गणं मतम् ।
कपाटवत्कवाटोऽपि, पक्षद्वारे खडक्किका ॥१८३७॥
कुसूलवत्कुसुलोऽपि, सम्पुटे पुटे इत्यपि ।
पेटाया स्यात्पेटकोऽपि, पेडापि कृतिना मते॥१८३८॥
पवन्यपि समूहिन्यामयोनिं मुसल विदु ।
कण्डोलके पिटकोऽपि, चुल्यामन्तीति कथ्यते ॥१८३९॥

खञ्जः खजाकोऽपि[२] मथि, विष्कम्भः कटकोऽस्य तु ।
अगोऽपि[१] पर्वते क्रौञ्चः, क्रौञ्चवन्मन्यते बुधैः ॥१८४०
कखट्यपि खटिन्यां स्यात्ताम्रमौदुम्बरं विदुः ।
शातकुम्भमपि स्वर्ण, पारदश्चपलोऽपि च ॥१८४१॥
रसजातं[१] रसाग्र्यं च, तुत्थे दार्वीरसोद्भवे ।
गौक्षिके वैणवोऽपि स्याद्गोपित्तं हरितालने ॥१८४२॥
मनःशिलायां नेपाली[१], शिली च सुधियां मता ।
शृङ्गारमपि सिन्दूरे, कुरुविन्दे तु हिङ्गुलः ॥१८४३॥
बोलो[१] गोपरसोऽप्युक्तो, रत्नं माणिक्यमित्यपि ।
पद्मरागे शोणिरत्नं[१], वैराट्टो[१] राजपट्टवत् ॥१८४४॥
नीले मणौ महानीलं[१], कमन्धमपि वारिणि ।
धूमिका धूममहिषी,[२] धूमर्यो[३] मिहिकाः समाः ॥१८४५॥
अकूवारोऽपि[१] जलधौ, मकरालय इत्यपि ।
निम्नगायां ह्रादिनी[१] स्याज्जह्नुकन्यापि जाह्नवी ॥४६॥
कलिन्दपुत्री कालीन्दी[१], रेवा मेकलकन्यका ।
चान्द्रभागा चन्द्रभागा, गोमती गोमतीत्यपि ॥१८४७॥
चक्राण्यपि पुटभेदाः, पङ्कं चिखल्ल इत्यपि ।
उद्घातनोद्घाटने[२] च, घटीयन्त्रे प्रकीर्तिते ॥१८४८॥

सरस्तडागस्तटाकोऽप्यथ तल्लेश्च पल्वले ।
आशयाशशुष्मबर्हिर्बर्हिर्लत्यदमूनस ॥१८४९॥
अग्नौ क्षणप्रभा विद्युद्वन्यवाहसदागती ।
वायौ चरणपेऽपि द्रुस्त्वके स्त्वचौ स्तबके पुन ॥१८५०॥
गुलुञ्छेलुञ्छचौ माकन्दरसालावपि चूतवत् ।
किङ्कराते कुरण्टककुरुण्टकावेपि स्मृतौ ॥१८५१॥
कर्कन्धूरपि कर्कन्धौ, ह्रस्वादिश्चाटरूषके ।
वाशा च स्नुहि स्नुहोऽपि, पियालोऽपि प्रियालवत् ॥
॥१८५२॥
नार्यङ्गोऽपि च नाङ्गोऽक्षे विभेदके इत्यपि ।
भवेत्तमालस्तापिच्छो, निर्गुण्डी सिन्दुवारवत् ॥१८५३॥
जपा जवौ मातुलुङ्गो, मातुलिङ्गोऽपि कीर्तित ।
धत्तूर इव धुस्तूरो, वशास्त्वकमारे इत्यपि ॥१८५४॥
ह्रीवर केशसलिलपर्यायै स्मर्यते बुधै ।
पङ्कजिन्या कमलिनी, कुमुदिनी कुमुद्वती ॥१८५५॥
विसप्रसूनं कमले, कुमुत्कुमुदवन्मतम् ।
शेपाल च जलनीली, सातीनोऽपि सतीनवत् ॥१८५६॥
कुल्मासवत्कुल्मापोऽपि, गवधुकी गवीधुकौ ।
कणिश कनिश रिद्धे, धान्ये त्वावासितं मतम् १८५७

हालाहलं हालहलं, मुस्तायां मुस्तकोऽपि[1] च ।
कृमिः क्रिमिरपि[1] गण्डूपदः किंचुलुकोऽपि[1] च ॥१८५८॥
शम्बुका अपि शम्बूका, वृश्चिको द्रुत[1] इत्यपि ।
मसलो[1] मधुकरोलिः[2], पिक्को विक्कः[1] करिः[1] करी ॥१८५९॥
व्यालो व्याडोऽप्यौपवाह्योऽप्युपवाह्योऽपरा वशा[1] ।
शृङ्खले निगलोऽन्दुश्च[2], कक्षा कक्ष्यापि वाह्लिके ॥१८६०॥
वाह्लीकोऽपि[1] वल्गवागे, खलिनश्च[1] खलीनवत् ।
मौर्योऽपृष्ठे गोपतौ तु, शंडे[1] इत्वरे[2] इत्यपि ॥१८६१॥
स्थौरी स्थूर्यपि[2] ककुदे, ककुत्ककुदमित्यपि[2] ।
नैचिकं नैचिकी[1] च स्यान्मलिनी वालगर्भिणी[1] ॥१८६२॥
पवित्रं[1] गोमये छागे, शुभोऽथ[1] मपकः शुनि ।
सैरभी देवशुन्यां च, यमरथोऽपि[1] सैरिभे ॥१८६३॥
पारिन्द्र इव पारीन्द्रः[2], शरभेऽष्टापदोऽपि[1] च ।
सृगालवच्छृगालोऽपि, प्लवगः प्रवगोऽपि[1] च ॥१८६४॥
वानायुरपि[1] वातायुरुन्दरोऽपि[1] च मूषके ।
ह्रीकुर्वनबिडालोऽपि, गोकर्णोऽपि भुजङ्गमे ॥१८६५॥
जलव्यालेऽलीगर्दोऽपि, शेषः स्यादेककुण्डलः ।
आशीराशी[1] च दंष्ट्रायां, निर्मोके निलयन्यपि[1] ॥१८६६॥

पतत्री पतत्रिरपि, पिच्छं पिञ्छमपि स्मृतम् ।
परपुष्टोऽन्यभृतौ च, पिके बर्हिणि बर्हिणे ॥१८६७॥
वायसे बलिपुष्टोऽपि, द्रोणोऽपि द्रोणकाकवत् ।
सारसा लक्ष्मणी क्रौञ्चा, कुञ्चौ चाषे दिवि किंकी ॥१८६८
किकिदीविरपि प्रोक्तष्टिट्टिभे टीटिभोऽपि च ।
कलविङ्के कुलिङ्गोऽपि, दात्यूहे कालकण्ठके ॥१८६९॥
दात्यूहोऽपि बलाका च, बकेर्हबिसकण्ठिका ।
मेधाव्यपि शुके तैलपायिकाया निशाटनी ॥१८७०॥
कपोते पारावतोऽपि, मत्स्ये मच्छोऽथ तन्तुणे ।
स्मृतो वरुणपाशोऽपि, नक्रे शङ्कुमुखोऽपि च ॥१८७१॥
उद्धारे कूर्म इत्येष, तिर्य्यक्काण्ड शिलोञ्छित ।
नारकास्तु नैरयिका, पाताले तु तुलं रसा ॥१८७२॥
इति पञ्चमकाण्डस्य, शिलोञ्छोऽयं समर्थित ।
जीवोऽपि चेतने जन्तौ, प्राणी जन्मोऽपि जन्मनि १८७३
जीवातुर्जीवितेऽप्यायुं, पुस्युदन्तोऽपि चायुषि ।
सङ्कल्पे स्याद्विकल्पोऽपि, मनो नेन्द्रियमव्यय ॥१८७४॥
शर्म सौख्य पीडा बाधा, चर्चा चर्चोऽपि वध्यते ।
विप्रतीसारोऽनुशयेऽप्यार्थो अपीन्द्रियार्थवत् ॥१८७५॥

सुसीमस्तु सुषीमोऽपि[1], कक्खटे खक्कटोऽपि[1] च ।
जाठे जरढो[1]ऽम्लेऽम्ळो[1], रावो[1] रव इव स्मृतः ॥१८७६॥

निषादो निषधो[1] गर्जो, गर्जा[1] मेद्रोऽपि[1] मन्द्रवत् ।
आकरो[1] निकरः युग्मे, जकुटोऽथ कनीयसि ॥१८७७॥

कनिष्ठं विग्रहः शब्दप्रपञ्चे निखिले पुनः ।
स्यान्निःशेषमनूनञ्च, खण्डलेञ्चापि[1] खण्डवत् ॥१८७८॥

मलीमसे कल्मषं[1] च, निकृष्टे याप्य[1]रेपसी[2] ।
लडहं[1] रमणीयं[2] च, रम्ये नित्ये सदातनम्[1] ॥१८७९॥

शाश्वतिकं[2] च नेदीयं[1], इयन्तिकतमे स्मृतम् ।
एकाकिन्यवगणोऽपि[1], प्राग[1]ग्र्यादौ प्रकीर्तितम् ॥१८८०॥

मध्यमे मध्यंदिनं[1] च, निरर्गलमनर्गले[1] ।
बहुरूपं[1]पृथग्रूपं[2]नानाविधाः[3] पृथग्विधे ॥१८८१॥

झम्पा झम्पो[1]ऽथ छन्ने स्याच्छादितं[1] पिहितेऽपि च ।
प्रकाशिते प्रादुष्कृतं[1]मवज्ञायामसूक्षणम्[1] ॥१८८२॥

बुधैरवमाननं[2]ऽवगणने[3] अपि कीर्त्तिते ।
अन्दोलनं[1]मपि प्रेङ्खाऽथोदस्तमप्युदञ्चितम्[1] ॥१८८३॥

भिदा भिद्यो[1]दितम[1]पीरितेऽथाङ्गीकृते पुनः ।
कक्षीकृतं[1] स्वीकृतं[2] च, छिन्ने छातमपि स्मृतम् ॥१८८४॥

प्राप्ते विन्नं विस्मृते च, भवेत्प्रस्मृतमित्यपि ।
अटाटाऽट्याँ पर्यटनेऽथानुपूर्व्यमनुक्रमे ॥१८८५॥
परीरम्भोऽपि संश्लेषे, स्यादुद्घातोऽप्युपक्रमे ।
जातो जातमपि स्पर्द्धा, सङ्घर्षोऽप्यथ विक्रिया ॥१८८६॥
विकारो विकृतिश्चापि, विलम्भस्तु समर्पणे ।
दिष्ट्या समुपजोषं सर्वदा सदा सनतं सनात् ॥१८८७॥
निर्भरे च स्वतीं हेतौ, येन तेन च कीर्त्तितौ ।
अहो सम्बोधनेऽपीति, षष्ठ काण्ड शिलोञ्छ्न १८८८
वैक्रमेऽब्दत्रिवह्निवन्द्रुमिते (१८३१) राधाद्यवस्ततौ ।
ग्रन्थोऽयं दृहभे श्रीमज्जिनदेवमुनीश्वरैः ॥१८८९॥

॥ इति श्रीजिनदेवसूरिदृब्धः शिलोञ्छः ॥

इति श्री हेमचन्द्राचार्यदृब्धे नाममालाशेषमाले
श्रीजिनदेवसूत्रित शिलोञ्छश्च समाप्त

पाटल्या पाटला स्याल्यमोघा तोयाधिवासिनी ।
वसन्तकामयोर्दूती, कुम्भिका कालवृन्तिका ॥ १९०८
अन्यस्या तत्र तु श्वेता, पाटला काष्ठपाटला ।
शीतला श्वेतकुम्भीका, कुवेराक्षी फलेरुहा ॥ १९०९
अगुरावगुरुर्लोह, वणिक विश्वरूपकम् ।
कृमिज प्रवर राजार्हं, स्याद् योगजमनार्यकम् ॥ १९१०
मङ्गिगन्धेऽत्र मङ्गल्या, कृष्णे तु काकतुण्डकः ।
श्रीखण्डे स्यान्मलयजं, चन्दन श्वेतचन्दनम् ॥ १९११
गोशीर्षक गन्धसार, भद्रश्रीस्तैलपर्णिकम् ।
फलकी सुरभि सारं, महार्हं रोहणोद्भवम् ॥ १९१२
अथ वर्बरके श्वेतं, निर्गन्धं वर्बरोद्भवम् ।
स्याद्रक्तचन्दने क्षुद्रचन्दन भास्करप्रियम् ॥ १९१३
ताम्रसार रक्तसारं, लोहित हरिचन्दनम् ।
कुचन्दने तु पत्राङ्गं, पत्त(त्र)क पट्टरञ्जनम् ॥ १९१४
सुरङ्गक रक्तकाष्ठ, पत्तूरं तिल्पर्णिका ।
अथ कुमोत्पलव्याध', परिव्याध सुगन्धक' ॥ १९१५
निर्गन्धेऽस्मिन् कर्णिकारो, निपीथ पीतपुष्पकः ।
पुंनागे तु महानाग , केसरो रक्तकेसर ॥ १९१६
देववल्लभकुम्भीकौ, तुङ्ग पुरुषनामक ।
अथागस्त्ये वङ्गसेन., शुकनासो मुनिद्रुम' ॥ १९१७

करवीरे कणवीरः, श्वेतपुष्पोऽश्वमारकः ।
प्रतिहासः शतप्राशोऽश्वारोहः कुमुदोद्भवः ॥ १९१८
रक्तपुष्पेऽत्र लगुडश्चण्डातश्चण्डगुल्मकौ ।
कालस्कन्धस्तमाले स्यात्तापिच्छो रञ्जतो वसुः ॥ १९१९
तमालपत्रे वस्त्राख्यं, रोमशं तामसं दलम् ।
सूक्ष्मैलायां चन्द्रबाला, द्राविडी निष्कुटिस्त्रुटिः ॥ १९२०
कपोतवर्णिका तुच्छा, कोरङ्गी बहुला तुला ।
स्थूलैलायां बृहदेला, पत्रैला त्वक्सुगन्धिका ॥ १९२१
त्रिदिवोद्भवा पृथ्वीका, कर्णिका त्रिपुटा पुटा ।
कर्पूरे घनसारः स्याद्धिमाह्वो हिमवालुकः ॥ १९२२
सिताभ्रः शीतलरजः, स्फटिकश्चन्द्रनामकः ।
कक्कोलके कटुफलं, कोमलं मागधोत्थितम् ॥ १९२३
कोलं कोषफलं कोरं, मारीचं द्वीपमित्यपि ।
लवङ्गे शिखरं दिव्यं, भृङ्गारं वारिजं लवम् ॥ १९२४
श्रीपुष्पं श्र्याह्वयं देवपुष्पं चन्दनपुष्पकम् ।
नलिकायां कपोताङ्घ्रिर्निर्मध्या शुषिरा नटी ॥ १९२५
धमन्यञ्जनकेशी च, शून्या विद्रुमवल्ल्यपि ।
अतिमुक्ते मुण्डकः स्यात्पुण्ड्रको भ्रमरोत्सवः ॥ १९२६
पराश्रयः सुवासन्ती, कामुको माधवी लता ।
पिप्पले बोधिरश्वत्थः, श्रीवृक्षश्चलपत्रकः ॥ १९२७

मङ्गल्य केशवावास, श्यामलो द्विरदाशन ।
गर्दभाण्डे कन्दरालच्छायावृक्ष कमण्डलु ॥ १९२८
प्लक्षो वटप्लवः शुङ्गी, सुपार्श्वश्चारुदर्शन ।
कपीतने कपीन स्यात्पीतनप्लवकावपि ॥ १९२९
कर्पटोऽपर्कटी प्लक्ष, सतीढो लक्षणे नटी ।
वटे वैश्रवणावासो, न्यग्रोधो बहुपाद्भव ॥ १९३०
स्कन्धजन्मारक्तफल, क्षीरी शुङ्गी वनस्पति. ।
उदुम्बरे जन्तुफलो, यज्ञाङ्गो हेमदुग्धक ॥ १९३१
सदाफलो वसुवृक्ष, श्वेतवल्को मशक्यपि ।
काकोदुम्बरिकाया तु, फाल्गुनी फल्गुवाटिका ॥ १९३२
फलराजी मलभारी, फलयूर्जघनेफला ।
राजादने तु राजन्या, क्षीरिका प्रियदर्शन ॥ १९३३
कपिप्रियो दृढस्कन्धो, मधुराजफलो नृप ।
प्रियाले तु राजवृक्षो, बहुवल्को धनुष्पुट ॥ १९३४
सन्नकद्रु खरस्कन्धश्चारस्तापसवल्लभ ।
आम्रातके वर्षपाकी, कपिचूत कपिप्रिय ॥ १९३५
कपीतन पीतनकस्तनुक्षीरोऽश्मपाटक ।
शृङ्गी कपिरसाढ्य स्वाद्रुप्पकलो निमीषण ॥ १९३६
अर्के विकीरणोऽर्काह्वो ज्यमला स्फोतविच्छुरा ।
क्षीरार्कपर्णो राजार्के, त्वलर्को गणरूपक ॥ १९३७

एकाष्ठीलः सदापुष्पो, मन्दारश्च प्रतापसः ।
त्रुट्यां वज्रो महावृक्षोऽसिपत्रः स्नक्सुधा गुडा ॥ १९३८
समन्तदुग्धा सीहुण्डा, शण्डेरी वक्रकण्टकः ।
करमर्दे करमन्दः, कराम्रकसुषेणकौ ॥ १९३९
स्थलपर्कट आविग्नः, कृष्णपाकफलोऽपि च ।
जम्बीरे जम्भलो जम्भो, जम्भीलो दन्तहर्षणः ॥ १९४०
वक्त्रशोधी दन्तशठो, गम्भीरो रोचनोऽपि च ।
करुणे तु छागलाख्यो, मल्लिकाकुसुमः प्रियः ॥ १९४१
बीजपूरे बीजपूर्णः, पूरकः फलपूरकः ।
सुपूरको मातुलुङ्गः, केसराम्लोऽम्लकेसरः ॥ १९४२
वराम्लो बीजको लुङ्गो, रुचको मध्यकेसरः ।
क्रमिघ्नो गन्धकुसुमः, केसरी साधुपादपः ॥ १९४३
मातुलुङ्गी वर्धमाना, मधुरा मधुकुक्कुटी ।
मधुवल्ली पूतिपुष्पा, देवदूती महाबला ॥ १९४४
आम्लिकायां चुक्रिकाम्ला, शुक्तिकाम्ली विकाम्लिका ।
चुक्रा चिञ्चा तिन्तिडीका, तिन्तिला गुरुपुष्पिका ॥ १९४५
वृक्षाम्ले स्यादम्लवृक्षस्तिन्तिडीको महीरुहः ।
शाकाम्लमम्लशाकं चाम्लपूरो रक्तपूरकः ॥ १९४६
अथाम्लवेतसे भीमो, भेदनो रक्तपूरकः ।
रुधिरस्रावकश्चुक्रं, मांसारिर्वानिकप्रियः ॥ १९४७

शाखाम्लो वेतसोऽम्लोऽम्लस्तिन्तिडीको रसाम्लक ।
स शङ्खद्रावको हीनो, लौहद्रावक उत्तम' ॥ १९४८
तावेव तु शतवेधिसहस्रवेधिनौ क्रमात् ।
कपित्थे वानरावासो, गन्धपत्र. कपिप्रियः ॥ १९४९
पुष्पफलो दधिफलो, दधित्थग्राहिमन्मथा. ।
अक्षिस्रदो दन्तशठो, राजाम्रश्चिरपाक्यपि ॥ १९५०
अश्मन्तके श्लक्ष्णपत्र , पाषाणवृक्ष इन्द्रक ।
अम्लपत्रस्ताम्रपत्र , कुशली, यमलच्छद ॥ १९५१
नारङ्गे स्यान्नागरङ्गस्त्वक्सुगन्धो मुखप्रिय ।
ऐरावतो योगसारो, योगी तत्राधिवासन. ॥ १९५२
खदिरे स्याद्रक्तसार , कण्टकी दन्तधावन ।
गायत्री बालपत्रश्च, जिह्मशल्य क्षितिक्षम ॥ १९५३
सिते तु तत्र कदर', कार्मक कुब्जकण्टक ।
सोमवल्को नेमिवृक्ष , श्यामसार पथिद्रुम' ॥ १९५४
विट्खदिरे त्विरिमेदो, गोधास्कन्धोऽरिमेदक ।
अरिमारोऽरिम पूत्यरिमेदो मुखशोधन ॥ १९५५
शाल्मलौ तूलिनी मोचा, पिच्छिला विरजा चिता ।
कुक्कुटी पूरणी रक्तकुसुमा घुणवल्लभा ॥ १९५६
कण्टकाढ्याऽनलफली, पिच्छा तु तस्य वेष्टक ।
कुशाल्मली शाल्मलिका, रोचन कूटशाल्मलि ॥ १९५७

शिंशिपायां महाश्यामा, पिच्छिला पाण्डुरच्छदा।
कृष्णसाराऽङ्गारवर्णा, गुरुरल्पा तु शिंशिपा॥ १९५८
कुशिंशिपा भस्मगर्भा, कपिला भस्मपिङ्गला।
बदर्यां कुवलिः कोलिः, कर्कन्धुः फेनिलच्छदा॥ १९५९
राष्ट्रवृद्धिकरी कोली, सौवीरी वज्रशिल्पिका।
घुटा घोण्टा कोपघोण्टा, व्याघ्रगृध्रनखीत्यपि॥ १९६०
शम्यां सक्तुफला लक्ष्मीः, शिवा तुङ्गाऽग्निपादपः।
अजप्रिया भस्मकाष्ठा, शंकरः शिवकीलिका॥ १९६१
शिवलोमा यतफला, लोमपामविनाशिनी।
मङ्गल्या शुचिपत्रा च, फले तस्यास्तु साङ्गरः॥ १९६२
इङ्गुद्यां तापसतरुर्मार्जारः कण्टकीटकः।
बिन्दुकस्तिक्तमज्जा च, पूतिपुष्पफलोऽपि च॥ १९६३
गुग्गुलौ तु पुरो दुर्गो, महिषाक्षः पलङ्कषः।
जटायुः कालनिर्यासो, वासवोलूकनामकः॥ १९६४
नक्तंचरः शिवधूपः, कुम्भोलूखलकः शिवः।
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः॥ १९६५
करीरे स्यात्तीक्ष्णसारः, शाकपुष्पो मृदुः फलः।
मरुजन्मा गूढपत्रो, ग्रन्थिलक्रकरावपि॥ १९६६
विकङ्कते स्रुवावृक्षो, ग्रन्थिलः स्वादुकण्टकः।
केकणिः काकपादश्च, व्याघ्रपादोऽपकण्टकः॥ १९६७

निल्वे महाफल श्याद्द, शलाटु पूतिमारुत । 
महाकपित्थ शाण्डिल्य, शैलूषो नीलमल्लिका ॥ १९६८
श्रीवास श्रीफलो हृद्यगन्धो मालूरकर्कटौ ।
हरीतक्या जया पथ्या, हैमवत्यभयाऽमृता ॥ १९६९
कायस्था पूतना चेतक्यव्यथा श्रेयसी शिवा ।
निर्मातके भूतवासो, वामन्तोऽक्षो वहेडक ॥ १९७०
सनर्तक कर्षफल, कल्को हार्य कलिद्रुम ।
कर्षो दैत्यो मधुवीजो, धर्मद्वेषी विभेदक ॥ १९७१
आमलक्या शिवा धात्री, वयस्था षड्रसाऽमृता ।
पर्वकाद्या तिष्यफला, माकन्दी श्रीफला च सा ॥ १९७२
अरणावग्निमन्थ स्यात्तर्कारी वैजयन्तिका ।
जया जयन्ती श्रीपर्णी, कर्णिका गणिकारिका ॥ १९७३
तेजोमन्थो हविर्मन्थो, नादेयी वह्निशोधन ।
अरलो दुन्दको दीर्घवृन्तानत कुटनट ॥ १९७४
श्योनाक शोपणो जम्बु, शुकनास कुटसर ।
मयूरजङ्घ कट्वङ्ग, सलक प्रियजीवक ॥ १९७५
मण्डूकपर्ण पत्रोर्णो, गोपवृक्षो मुनिद्रुम ।
शिग्रौ शोभाञ्जनस्तीक्ष्णगन्धो मूलकपल्लव ॥ १९७६
चित्रध्यराति काक्षीवो, मुखमञ्ज. सुभञ्जन, ।
दशोऽक्षीव सुरञ्जी च, मोचको मधुगृञ्जन ॥ १९७७

श्वेतेऽत्र श्वेतमरिचो, रक्ते तु मधुशिग्रुकः ।
तिनिशे रथकृन्नेमिर्वञ्जुलो रथसाधकः ॥ १९७८
दीर्घवृक्षश्चक्रकरो, रथनामातिमुक्तकः ।
अश्मगर्भः सर्वसारः, क्रमसंधारणोऽपि च ॥ १९७९
पलाशे किंशुकः पर्णः, खरपर्णस्त्रिपत्रकः ।
त्रिवृन्ताख्यो रक्तपुष्पो, वीजस्नेहः समिद्वरः ॥ १९८०
क्षारश्रेष्ठो वातपोथो, याज्ञिको ब्रह्मपादपः ।
धवे भारोद्वहो गौरः, सकटाक्षो धुरंधरः ॥ १९८१
कुलवो नन्दिनश्चापि, सितः कृष्णश्च स द्विधा ।
श्रीपर्ण्यां काश्मरी कृष्णा, वृन्तिका मधुपर्णिका ॥ १९८२
गम्भारी सर्वतोभद्रा, कट्फला भद्रपर्णिका ।
विहारी कुमुदाहारी, महाकुम्भी च कश्मरी ॥ १९८३
नित्यभद्रा महाभद्रा, काश्मर्यो मधुमत्यपि ।
सप्तच्छदे शुक्तिपर्णो, गुच्छः पुष्पः सुवर्णकः ॥ १९८४
स्थूलपर्णो दीपवृक्षः शारदो विषमच्छदः ।
मदगन्धिर्विशालत्वग्गजद्विट् शाल्मलीदलः ॥ १९८५
शिरोरुर्गेहविटपः, सुमनो ग्रहनाशनः ।
आरग्वधे कृतमालः, कर्णिकारः सुवर्णकः ॥ १९८६
पीतपुष्पो दीर्घफलः, शम्पाकश्चतुरङ्गुलः ।
व्याधिहा रेवतः स्थूलः, प्रग्रहो राजपादपः ॥ १९८७

